వర కట్టివానిని పూరించి సవరించినాను. శిథిలపూరణములను కుండలీకరణములం దుంచినాను. వ్రాతతప్పులను, నేను తప్పులను కొన్నవానిని ఉన్నవియున్నట్లుగా నధోజ్ఞాపికలం దిచ్చినాను. పూర్తిగా శిథిలములైన తావులు III - 192 వంటివానిని పూరింపక చుక్కల గుర్తులతో విడిచినాను. తెలుగువసుచరిత్రముతో దీనిని పోల్చి చూచుకొనువారి సౌలభ్యమునకై ప్రతిశ్లోకప్రారంభమున నది తెలుగువసుచరిత్రమునందలి యేపద్యమున కనువాదమో దాని సంఖ్యను వావిళ్ళవారు ముద్రించిన చతుర్థముద్రణము ననుసరించి యిచ్చినాను. IV - 32 గద్యము చివరన (నిర్గతాయాంచ తస్యామ్) అను కుండలీకరణమందలి మాటలను నేనే చేర్చినాను. ఇట్లు చేర్చనిచో తరువాతిపద్యము గిరికాదేవికి సంబంధించినది మంజువాణి కన్వయించు ప్రమాదమున్నది. గ్రంథాంతమున ననుబంధముగా పద్యానుక్రమణికను గూడ చేర్చినాను. ఆంధ్రమహాప్రబంధములం దగ్రగణ్యమగు వసుచరిత్రమునందలి యందచందములు సాధ్యమైనంతవరకు సంస్కృతమున సాధించి తెలుగువారి ప్రతిభాపాండిత్యములను ప్రపంచమంతటికి చాటుటకు ప్రయత్నించిన కాళహస్తికవి ఆంధ్రజాతికి ప్రాతస్స్మరణీయుడు. ఆతని కృతిని ప్రకటించు భాగ్యము కలిగినందుకు నేను ధన్యుడనుగా భావించుచున్నాను.

దీని పరిష్కరణమున నాకు తోడ్పడినవారు నా పూర్వవిద్యార్థి డాక్టరు. కె. సుప్రసన్నాచార్యులు, మద్గురువులు శ్రీమదాచార్య రఘునాథచక్రవర్తి, నా మిత్రులు శ్రీ. వి. సుందరశర్మగారలకు కృతజ్ఞుడను. శ్రీ. వి. సుందరశర్మగారు దీని ప్రెస్ కాపీ సిద్ధము

చేయుటేకాక ప్రూపులుకూడ దిద్ది నా భారమును పంచుకొన్నారు. ఈ గ్రంథమును పరిష్కరించి ప్రకటింపవలెనను కోరిక నాలో చాల కాలముగా నుండినను మావిశ్వవిద్యాలయోపాధ్యక్షులు డాక్టరు డి. సదాశివరెడ్డిగారు పూనుకొని యూనివర్సిటీ గ్రాంట్స్ కమీషను వారిచే దీని ముద్రణమునకై రూ. 2350 - ఇప్పించనిచో నిది యింత తొందరగా ప్రకాశిత మయ్యెడిదికాదు. మా విశ్వవిద్యాలయోపాధ్యక్షులకును, U. G. C. వారికిని హృదయపూర్వకముగా కృతజ్ఞత లర్పించుకొనుచున్నాను. దీని నందముగా ముద్రించి యిచ్చిన రత్నంప్రెస్ (మద్రాసు) వారికిని కృతజ్ఞుడను.

1-8-117/2 చిక్కటిపల్లి,
హైద్రాబాదు - 20, ఆంధ్రప్రదేశము.
15-4-1965

బి. రామరాజు



शुभमस्तु

# कालहस्तिकविविरचितं

# वसुचरित्रम्

## प्रथमाश्वासः

### पीठिका

कल्याणमावहतु नः करिराजवक्त्रो
ब्रह्माण्डपादकटको बलिसद्मपादः ।
पाथोधिबृन्दवमथुः परमेशभाग्यं
तारासमं हि सुमनस्तबकीकृतेन्दुः ॥ १

(I-7) श्रीदन्तघट्टितशिवाश्रयशैललोल
गौरीस्वयंग्रहसुखं कलयन् स्मरारेः ।
गङ्गाझरग्रसनतो जननीमुदं प्रा-
क्कुर्वन् करोतु कुतुकानि कुमारवर्यः ॥ २

ऐश्वर्यमष्टविधमष्ट[1]दिगीश्वरत्वं
(दास्यामि चैकपद)माश्रयतामितीव ।
मुद्रां वहन् [2]घनधिया वटमूलवासी
मोदं तनोतु मम मुग्धशशाङ्कचूडः ॥ ३

पाणिस्फुरत्पद्मनिधिश्रितः स्या-
त्पद्मासनः पद्मविलोचनश्च ।

1. मष्ठदिगिश्रवत्व 2. घनधिषो

इतीव पद्मं दधती हितं मे
कामाक्षिदेवी कलयेन्मदम्बा ॥ ४

( I-5 ) सर्वज्ञेश्वर साधु साधु शिरसा मन्दाकिनीन्तां वह-
न्नर्धाङ्गीकृतिमातनोर्मयि बतेत्यार्यामर्मषाकुलाम् ।
साष्टाङ्गं प्रणमंस्तदङ्घ्रियुगलीसम्पर्ककोपारवां
सर्वेशोऽनुसरन् स पातु मकुटीसम्यक्क्रियाकैतवात् ॥ ५

( I-1 ) मञ्जीररत्ननिजमञ्जुतनुं विवाहे
कन्यां वराङ्घ्रिरजसा कलितां विचिन्त्य ।
अश्माङ्घ्रियोजनमिषादवनीसुताया-
स्तद्रोपनो रघुपतिस्तनुतां जयं नः ॥ ६

( I-2 ) सर्वाश्चर्यकलाकलापविलसद्वक्तेन्दुसंलक्षिता
नानादिव्यफलालिसौष्ठवकिरन्नव्योष्ठरत्नान्विता ।
अम्लानप्रसवस्रगञ्चितभुजाकल्पाङ्गवल्लीयुता
गुम्भद्यौवनकारणस्तनसुधाकुम्भद्वयोदञ्चिता ॥ ७

( I-2 ) अहीनगुणनद्धेशशरासगिरिमन्थनात् ।
जनकाग्रस्थिता दद्याज्जयं [1]रामा हरिप्रिया ॥ ८

( I-3 ) सङ्गीतसाहित्यसमाख्यवाणी-
वक्षोजयुग्मे वरतालवृत्ते ।
प्रस्तारपालीमलघुं नखाङ्का-
न्विस्तारयन्विश्वकलेश्वरोऽव्यात् ॥ ९

( I-4 ) स्वच्छाक्षदाममिषसंश्रयवर्णबृन्दे
वीणारवद्रवमये विमलात्मबिम्बात् ।

1. रामहरिप्रिया

आवेदयन्त्यमृततां निजवाचकत्वे
वागीश्वरी दिशतु वाञ्छितमस्मदीयम् ॥ १०

(I-6) घनाघनश्रीघनकैश्यमब्ज-
वतंसिकं कुण्डलिवर्ण्यकर्णम् ।
द्वैपाम्बरं चित्रसमञ्चिताग्नि-
शिखं प्रकाशागमहेतु धाम ॥ ११

(I-6) रतीष्टभूतिं कमलाभिराज-
त्पाणिं च या पार्श्वयुगेन धत्ते ।
साऽन्योन्यवेषात्तभिदाऽतिहार्दा-
दूरीकृतेशाश्रितनूरुमाऽव्यात् ॥ १२

(I-8) अथ निरतिशयशैशव एव यो महनीयो रुचिभिः फलमोहरुचिभिश्च तरुणतरणिकबलनसमुद्धतिं दर्शयामास, यो वा शये हृत्कुशेशये च रम्यराममुद्रिकामुवाह, यो वा जवेन गुणगणार्जवेन च पल्वलमिव पयोधिं ततार, यो वा रणेन नियमधारणेन च महाक्षशिक्षाविचक्षणतया रराज, यो वा दानवद्विरददलन विहरणेन निजकेसरिकिशोरवृत्तिं प्रकटयामास तादृशमहितमहिम वन्तमन्तरङ्गे सन्ततं चिन्तयामि धीमन्तं मृदुस्वान्तं यशोवन्तं हनूमन्तम् । १३

(I-9) यः कन्यां कवितां क्षितावजनयद्यो वा ततानागमा-
न्यो वाऽहं त्वमितीरणान्यरचयद्योऽदात्पदालिं मृदुम् ।
यस्सानन्दमजीघटद्घनतुलाकोटिं गुणान्योऽदिश-
द्येनापेनकराप्तिरर्थगुरुतां योऽपूरयद्विश्रुताम् ॥ १४

(I-9) वाल्मीकिपाराशरिकालिदास-
दण्डिप्रहृष्यद्भवभूतिमाघान् ।

वल्गन्मयूरं वरभारविं च
　　महाकवीन्द्रान् मनसा भजे तान् ॥ १५

(I-11) सन्त्यक्तवृत्तनियमां सकलास्तभावा-
　　मन्यार्थवञ्चनपरामतिमूर्खनन्द्याम् ।
उत्सेकिनीं कुकवितामुपरिप्लुवार्थां
　　धीरोत्तमा न गणयन्ति धृतानुभावाः ॥ १६

(I-10) वाक्शासनप्रथितकुण्डलिवल्लभश्री-
　　नाथेषु नद्धजननस्थितिपालनेषु ।
सोमे च शोभयति भास्करनाम्नि चान्ध्र-
　　काव्यप्रपञ्चमहिमा स हि माननीयः ॥ १७

सविधसम्मुखसावयवस्फुर-
　　द्विविधमन्त्रकलाविधिदैवतम् ।
द्विरदराजमुखाहृतगौरवं
　　'वरदराजगुरुं' वरदं भजे ॥ १८

श्रीदक्षिणामूर्त्यपरावतारं
　　श्रीकण्ठभाष्याम्बुधिपूर्णचन्द्रम् ।
अत्यादरा 'दप्पयदीक्षितेन्द्रं'
　　विद्यागुरुं मन्त्रगुरुं भजामि ॥ १९

व्याधापचारमखिलं विविधोपचारं
　　लूतागुणालिमतिलोलवितानपालिम् ।
मत्वा तयोरपि ददौ महितात्मतां य-
　　श्श्रीकालहस्तिनिलयं शिवमाश्रये तम् ॥ २०

कामाक्षि देवि करुणामयि कामकोटि
　　काञ्चीपुरीश्वरि कदम्बवनीनिवासे ।

कान्तैकचूतपतिना कलितावधाना
कर्णामृतं कलय काव्यमिदं मदीयम् ॥ २१

इति पीठिका

वसुप्रसुर्वासवदौत्यरीत्या
कोलाहलाद्रीशकुमारिकायाः ।
गीतोज्ज्वलाया गिरिकाभिधायाः
कल्याणशालीति कथाऽस्तु पुण्या ॥ २२

कथामिमां कोमलगद्यपद्यै-
र्यथामनीषं रचयामि रम्याम् ।
बुधावलीकर्णपुटेषु सेयं
सुधा भवेदद्रिसुतामहिम्ना ॥ २३

( I-94 ) अस्ति प्रशस्ता हरिराजधान्याः
पुण्यैरधिष्ठानपुरी समृद्धा ।
ब्रह्माण्डधीकृत्पदखेयमध्य-
हीराग्रगङ्गावृतहेमसाला ॥ २४

( I-94 ) अपि च सा सुमनोवरागमानामतिशयालवालं, भव्यकलापालिनां भरण्यास्पदं, लालनीयधान्यमुक्तासराणां ललिताधारभूमिः, कल्याण परम्पराणां कनदन्तरीपं, महारुचिरमणीनां महिताकरसीमा, श्रुति-मञ्जुवचनद्विजानां शोभनशाखावलम्बनं, सरसीन्द्राणां सन्नुतारा-मसरणिः, श्रीरङ्गमन्दिरकोडवासिन्याः श्रीविशाला लास्यशला ।
२५

( I-95 ) गुम्भद्ग्रहांशुगुणितागणिताग्ररत्न-
श्रीशोभियद्वरणशीर्षतलान्तराले ।

गन्तुं सदा गगनसीमनि निर्निरोधं
चक्रे रथं नु चतुरो रविरेकचक्रम् ॥ २६

( I-96 ) उत्तीरयत्खेयजलैरुदग्रे
पातालल्लोके पटुपादचारः ।
अशक्य एवेत्यतनोदहीन् किं
[1]वेधोनुबोधादुरगान् सुमेधाः ॥ २७

( I-97 ) चतुरास्याः पूरुषेन्द्रास्सर्वज्ञाश्शतमन्यवः ।
शुचयो धर्मिणः पुण्यजना यत्र प्रचेतसः ॥ २८

( I-97 ) ये सदागतयोऽक्षीणनवार्थेशाः कलान्विताः ।
जगद्धितास्ते भूदेवा देवतातिशया न किम् ॥ २९

( I-98 ) यत्र च वैरेपि दीप्यमाने तेजोमहिमानो राजानो विगलितेष्वपि शरेषु विवर्णताविहीना घनाः, यदा कदाचिदप्यभिधनदाशमकृत-करप्रसारशङ्कास्सार्वभौमाङ्काः, रणां(गणे प) श्वा[2]त्पुरोऽध्वप्रचाराः कुमाराः, घनारिकौतुकार्थमनाकलितकरप्रदानरचना इनाः, सङ्ग्राम-रङ्गे सर्वदाखड्गधारिणो नृकेसरिणः, नितान्तमवर्जितसद्गतयो (गोत्रप)तयः, निरन्तरं छिद्रवियोगिनो महाभोगिनः, विभान्ति पुष्पवद्रंश्यतया कुवलयाधाराः कमलानुगुणविहाराः, निरतिशय-सौजन्याः, नीतिपरमूर्धन्याः, निरुपमयशःकन्याः, निस्तुलदया-धन्याः नित्यशुभराजन्याः । ३०

( I-99 ) श्रीदं यत्र विशो विहस्य सुहृदो भैक्ष्यापनोदाक्षमं
मित्रं कर्तुमभीक्ष्णमक्षयवसूत्कर्षं च मित्रश्रियाम् ।
सम्मार्ष्टुं च घनोपरोधमधिकं शक्ता निषद्यामणी-
कुम्भिन्युन्नतहेमराशिसुषमाकोटिध्वजालीपटैः ॥ ३१

---

1. वेदानुबोधा 2. त्पुरोध्वग

(I-100) तद्विष्णुपादभवताद्दशधान्यराशि-
चन्द्रामृतोदितनवाङ्कुरचर्वणेच्छुम् ।
गङ्गा तदीयसहजा कमलास्यनिर्य-
द्भृङ्गारवैर्विधुमृगं भृशमाशु रुन्धे ॥ ३२

(I-101) मत्तारिभीकरमदावलकर्णताल-
वातूलधूतपरिभूतवलाहकौघः ।
तत्रासमाद शरणं तरसा तदीय-
पादान् सदा नु घनपादमदाभिधानः ॥ ३३

(I-102) प्राप्ताब्धीन् परभूभृदाप्तिषु हरीन्नाकान् समानन्वते
तल्लज्जाहयरूपशोभितरणिं छायागतं रेणुभिः ।
पादोत्थैः स्थगयन्ति सूर्यगहरिं (तं पादघारं निरा-)
(हत्याश्वाः प्रहसन्ति सप्ति)तुरगं सम्पूर्णधाराभरैः ॥ ३४

( I-103 ) रथालिचक्राहतराजवीथी-
भर्मावनीभासुररेणुपातैः ।
अभ्रापगायामभिपङ्किलायां
( हैमानि जातानि सरोरुहाणि ) ॥ ३५

( I-104 ) यन्नाट्यशालामुरजादिनाद-
सन्नाट्यकन्यामणिसन्ततेः प्राक् ।
गोत्राणि हकुशोत्रभुजां हि दृष्टि-
पा(त्राणि भूत्वा नगरे नटन्ति) ॥ ३६

( I-105 ) चन्द्राश्मसौधतलचारुनटद्वधूटी-
र्वीक्ष्याऽनिमेषवनिता वृतदिव्यचित्राः ।
लास्यान्तगानलसमानसजीवचित्र-
( सम्बाधतो ह्यपसरन्ति बहिर्नगर्याम् ) ॥ ३७

(I-106) तद्वज्रगोपुरशिखातपनीयकुम्भा-
नाशागजास्सुरनदीकनकाब्जबुध्द्या ।
यत्नात् स्पृशेयुरिति यन्त्रिततद्व(यार्थं)
(निक्षिप्तमूर्तय इव प्रतिभान्ति सिंहाः) ॥ ३८

(I-107) अथ घनानामचलाधिवासनकल्पनया द्विजराजमण्डलस्य कृशतावितरणेन कुवलयस्यानुदिनमुल्लोक(करणेन बन्धुजीवस्याऽमो)दादानेन बुधगोत्रस्य महौन्नत्यभङ्गसम्पादनेन सरस्वतिशयानां सरसीन्द्राणां कालुष्यकलनया दानिहस्तेषु वसुलक्ष्म्ययो(जनेन कनिष्ठानां पङ्क)-प्रापणेन च जनितमहितापवादं क्रमेण धाता तदीयनगरयुवतीजनकुटिलकचललितमुखघननयनसु(रक्तोष्ठसुवृत्तकुचकल)शनिम्ननाभिमहोरुकाण्डमृदुचरणरचनार्जवेन ममार्ज । ३९

(I-108) आक्रीडगन्धमुदितैरमरैर्यतोद्या-
मा(रोपितास्सुरनदीजलवेणिकाभिः ।)
(त)त्सन्ततिप्रभवतत्तरुलक्ष्म्यपूर्त्या
तत्कल्पपादपयशः किमगात्तदादि ॥ ४०

(I-109) पुन्नागसुरभिले पुन्नागकु(सुमं किमित्यपवारयसि ? ननु) भूरिजघनान्तरीपाग्रजं तन्न किमपवारणीयम् ! इन्दीवराक्षि (कि)मिन्दीवररेखां छादयसि ? ननु सु(रदीर्घिकापार्श्वस्था किं नाऽच्छादनीया !) (पङ्कजमुखि) करे(ण) पङ्कजमुकुलयुगलं किमिति गोपयसि ? ननु मानसभूनिधानं तन्न किं गोपनीयम् ! पुष्पकोमलाङ्गि कु(सुमवल्लरीं किमिति न प्रकटयसि ? ननु सा कनकशिखरिसविधभासुरा किं प्रकटनीयेति नाभिरोमराजिकुचबाहुमूल निरीक्षणपररसमर्मन(र्म)वचनरचनाविलासभासुरा विभान्ति तत्र पुष्पविक्रयभावुकाः पुष्पलाविकाः । ४१

(I 110) स्रोतस्विनी लसति शुक्तिम(ती पुराग्रे)
(केदारसस्यपरिपोषणसार)कुल्या ।
सत्रान्नभाग[1]समवेतबुधालिसान्द्रा
हेमाब्जनिन्हुतसुरालयसिन्धुकीर्तिः ॥ ४२

(I-112) तत्सैकते सिततमीषु पिधानकेल्या
(लीनासु राजतनयासु कदल्यधस्तात् ।)
प्राक्प्राप्य गन्धमकिरत्पवनार्भकाली
तन्मार्गणालिद्दशि तद्घनसारधूलीः ॥ ४३

(I-113) तद्वारिकेलिविलसत्तरुणीकुचाग्र-
(निर्मुक्तसङ्कुमदवासितवेणि)काभिः ।
केदारजाङ्गलभवैः कलमादिधान्यै-
रसा पूरपूरि घनसङ्कुमदातिगन्धैः ॥ ४४

(I-114) प्रवालनीडद्विजपालिचञ्चू-
(विदीर्णपुण्ड्रेक्षुरसप्रपूराः) ।
(त)च्छालिपाली[2]ततिगीतिसङ्गते-
रानन्दबाष्पा इव भान्त्यमन्दाः ॥ ४५

(I-115) राजधान्याः पतिस्तस्या राजदोजा वसुप्रभुः ।
अ(सिधाराहतराजहंसपद्मोद)यो[3]ऽभवत् ॥ ४६

(I-116) ताराध्वजालकयशस्ततिवज्रसौधो
भर्माद्रिभूरिकणभासुरशौर्यवह्निः ।
नक्षत्ररत्नबल(धूतरजोऽवनीकः)
(दानाख्यनीरनिधि)[4]शीकरिताभ्रगङ्गः ॥ ४७

1. समवेद 2. ततिगिरिते
3. योभवेत् 4. शीकरता

(I-116) शुम्भद्ब्रह्माण्डफलवद्गुणकल्पलतागणः ।
व्यभादतिशुभाकारो विभावसुनि(भो वसुः ॥) ४८

(I-117) (तप्त्वा तपश्चिरमिलानिलभक्षणाऽ)द्रि-
वासप्रभा वसु(मती)वरतद्गुणौघैः ।
प्राप ध्रुवं प्रकटगन्धवतीप्रतीतिं
कल्याणरत्नविलसत्कटकाभिरूप्या ॥ ४९

(I-118) [1]उद्वृत्तोल्बणराजसारमथने स्वाधीनतद्रक्षणे
सामान्येक्षितृतापने सकलदृक्साफल्यदाने च सः ।
दक्षस्सिन्धुविशोषपोषकरणे तेजोग्निदानोदकैः
[2]धाम्नोरेस्समिदुन्मुखस्य हरणे पादस्पृशो भासने ॥ ५०

किं च, ५१

(I-118) अत्यन्तमण्डलधृतौ हरिमित्रभावे
सन्मार्गगत्यधिगमे च (स) एव शक्तः ।
इत्येव तस्य हितधीः किमु लोकबन्धो-
र्वेधा व्यधत्त विशदं वसुराजनाम ॥ ५२

(I-119) कोलाहलाख्यकुलशैलसुते कदाचि-
त्तच्छुक्तिमत्युपरि तादृशि लम्बमाने ।
क्षिप्ते नखेन सुलभं क्षितिपेन तेन
तत्सख्यमाप नगभित्तरसाऽदरेण ॥ ५३

(I-120) ऋद्धकोलाहलापातरुद्धशुक्तिमतीजले ।
[3]मज्जदुर्व्यां महाकोलसज्जदंष्ट्राऽस तन्नखः ॥ ५४

1. उद्वृत्तोल्बणराजसारमधनसर्वधिनतद्रक्षणे ।
2. धामाते
3. मज्जदुर्वामहाकोलसज्जदंष्ट्रासतन्नखः ॥

( I-121 ) पाकाहितेष्टवसुपार्थिवपन्नखाग्रा-
त्पर्याप्तपर्वतविपाटनपाटवं तत् ।
वज्रं नमन्नरवरालिकिरीटहीर-
सारच्छलेन किमवाप सदाश्रितं सत् ॥ ५५

(I-122) अर्धासनं वसुवरेऽयति चारणानां
नानाद्रिखण्डननुतेर्नगभिन्नतस्सन् ।
चिक्षेप पीठगतचित्रमणिं नखेन
संसूचयन्निव तदद्भुतशैलकृत्यम् ॥ ५६

( I-123 ) प्रायोवरार्थमिव पादसमीप एव
तस्मिंस्थिते सति तथा निभृतातिनम्रम् ।
निक्षिप्तमञ्जुलपदो नितरां तदग्रे
क्रीडाचलं स कृतवान्कृपया तमद्रिम् ॥ ५७

(I-124) भूभामिनी तदुपगूहनभूरिभाग्या
सन्तानसङ्कलिता समुदूढगोत्रा ।
विख्यातमङ्गलवितानतता सदैक-
सन्तानदेवनगरीं सदृशीं न मेने ॥ ५८

( I-125 ) कनत्पत्रलतां लक्ष्मीः कलिकाकमलामपि ।
सामोदपरमां चक्रे सैरन्ध्रीव तदा भुवम् ॥ ५९

( I-126 ) कान्तालोक[1]वलद्वलक्षविलसत्कन्दर्पदोर्विक्रमो
वाताधूतरसालसालफलभुग्वाचालकीरावलिः ।
भृङ्गीपक्षविनीलसिन्धुनलिनीभूहृष्टचक्राङ्गनो
राजत्कुञ्जरतीश[2]युद्धकलनातान्ताङ्गरामाप्रियः ॥ ६०

1. वल. न् क्षवल
2. यन्द्र...वना

(I-126) कृतकान्यगन्धनुतकान्तमेदिनी-
बकुलादिसालमुकुलातिमञ्जुलः ।
कलकण्ठबालकुलकण्ठकाकली-
प्रथिमाविरास मधुमासवासरः ॥ ६१

(I-127) (आकर्षन्)तुहिनावगुण्ठनपटं तत्पत्रभङ्गं नय-
न्सोत्कम्पं मुकुलस्तनान्किसलयोदञ्चत्करैर्गूहताम् ।
मन्दं जाड्यमपास्य मञ्जुललतामुग्धाजनानां स्पृश
न्बद्धामोदतलानि दक्षिणमरुद्बन्धान्किमध्यापयत् ॥ ६२

(I-128) सूनासवैस्सुमशरात्तमरुत्कुमारं
प्रस्नाप्य पुष्पपटपल्लवलोलडोलाम् ।
प्रापय्य माधवरमा[1]प्रमदाय धात्री-
जातोत्तमा जगुरलं कलकण्ठनादैः ॥ ६३

(I-129) वन्यश्रीः प्रकटीचकार सुमनोरागाद्वसन्तं पुरा
कङ्केल्या मधुरं मरन्दमकिरत्कान्तालिपंक्त्यामसौ ।
माधव्याः किसलाम्बरे महति सा गाली ममार्जैव तं
द्दग्रागाय परागमाशु कलकण्ठ्यग्रे विचिक्षेप सा ॥ ६४

(I-129) एवं लताभिरपि जातहितान्विताभिः
कामोत्सवे निरुपमं कलिते तदानीम् ।
कन्दर्पदैवतमहोत्सवकल्पनेच्छा
[2]तादृङ् न किं नु तरुणीतरुणावलीनाम् ॥ ६५

(I-130) त्यक्त्वाऽथ पञ्चम(म)रिं तरुणीजनेषु
हिन्दोलगायिषु हितात्मरवावमत्या ।

1. "प्रचयाये"ति पाठान्तरम् 2. तादृग्वि किं नु

वन्यां पिकेषु किसलव्रतिषु स्वरं तं
सम्पूर्णतोऽनुजगृहे रिसमं वसन्तः ॥ ६६

(I-131) दुःखैरसह्यकरघातभवैर्हिमाद्रि-
दुर्गं गते हिमकुले द्रुतमब्जिनीशः ।
आक्रम्य तादृगहितं प्रबलो निहन्तुं
दाक्षिण्यमाशु किमपास्य ययावुदीचीम् ॥ ६७

(I-132) आरुह्य मन्दमरुदात्मरथं मनोभू-
देवेऽभियाति दिवि [1]भाविफलाभिलाषात् ।
सालाग्रसौधमधिरुह्य लतातरुण्यः
किं फुल्लपल्लवकरैरकिरन्सुमानि ॥ ६८

(I-133) आमर्दयन्भ्रमरकान्महिलावलीनां
श्यामालिपत्त्रचयहार्यथ पद्मिनीनाम् ।
कर्षन्स[2]कङ्कणकरान्वनगन्धवाहो
माद्यन्सगन्धविटपो मधुनाऽरराम ॥ ६९

(I-134) कुञ्जौकःकनकान्यशोककुहनादीपार्चिषोपाददा-
वेलावारवधूपरागपटिकास्सालान्विलंघ्याकृषत् ।
सङ्गीत्या मधुपावलेर्मधु ददौ सौनं स गन्धानिलो
आजत्कीरभटाभटीभिरतनोद्भास्वत्फलव्याहतिम् ॥ ७०

(I-134) इति मलयपवनचौर्यमीरयन्त इव केलीवनपाला विकचकुसुमानि विशिथिलरजांसि विगलन्मधूनि विलुठत्फलानि च महोपहारतया वसुधाधिनाथसविधे निधाय गिरा सुधाविधया कथयामासुः । ७१

1. भाविफलाषात्
2. सककणगणान्

( I-135 ) स्वामिन्सदारामवरं सचैत्रं
कथं स्तुमः कामनिशातबाणाः ।
तन्मञ्जुवल्लीतरवः प्रवाल-
शाखाप्रसाराश्शतकोटिसाराः ॥ ७२

अपि च क्रमेण, ७३

( I-136 ) प्रवाला मुकुला गुच्छाः प्रसूनानि तदङ्कुराः ।
भव्यनव्यशलाटूनि भान्ति पक्वफलानि च ॥ ७४

किं च, ७५

( I-137 ) केली(वने रसति) केकिकुलं [1]शुकौघः
( स्वर्द्रु ) विहाय [2]दिवमुत्सुमसौरभाय ।
अत्रागतानलिगणानवलोक्य मोदा-
दाडम्बराम्बुदकदम्बविडम्बिबिम्बान् ॥ ७६

( I-138 ) मकरन्दमहाकुल्याः परागपदसेत(वः ।
सहकारा हि तत्रस्थास्सहकारा दिने दिने ॥ ) ७७

( I-139 ) सेवन्तिकाम्बुचिरसिक्तसिताभ्ररम्भा-
कर्पूरवेदिघनकेलिसरस्समेत्य ।
सूक्ष्मं द्रवत्युदकयन्त्रसृतेर्वनस्थ-
तिग्मांशुभीततिमिराप्ततुषारधीकृत् ॥ ७८

( I-140 ) तत्कुञ्जवल्लितरुपल्लवसूनशय्या-
लक्ष्मीनुतौ कमलजोऽपि न लब्धवर्णः ।
(केलीवनेन) बत चैत्ररथं समं कि-
मेकैकसाल इह चैत्ररथाधिलीलः ॥ ७९

1. शुकौघात् 2. दिवयत्सुम

( I 141 ) लीलाकुञ्जगृहेषु शोभिषु पराश्शाला न कल्प्यास्सुमै-
मा नानापटवासक्लृप्तिरयने सूनालिरे[1]णूक्षणे ।
पूर्णा विभ्रमदीर्घिका स्सुमकु(जो)द्गीर्णासवैः किं जलै-
र्वाताधूतसिताभ्ररेणुरुपरि [2]स्फीता वितानैरलम् ॥ ८०

( I 141 ) हृद्यानवद्यसौभाग्यमुद्यान[3]मभिवीक्षितुम् ।
वनपालकचैत्र[4]स्त्वां वनपाल इवेच्छति ॥ ८१

( I-142 ) आलापसुधयाऽऽरामपालावलिभुवा तदा ।
लीलावनदिदृक्षाऽभूत्कोलाहलजितो विभोः ॥ ८२

( I 143 ) अथ स वनीपकानवनीपकान्विधाय बुधादृतो निजाराममधुसहज-
सौभाग्यभाग्यदर्शनमनोरथो महारथो रथानयनाय घनसारथिं
[5]गुणनीरधिं श्रीदयावासश्चोदयामास । ८३

तदनु, ८४

( I-144) हीराधारमहादारु राराजन्मणिचक्रकम् ।
चारुनीलाक्षिनक्रास्यगारुडाश्मपुरोभुवम् ॥ ८५

( I 144 ) मुक्तापाश्वं रत्नशोभारक्तासनपटावृतम् ।
विद्रुमस्तम्भसम्भारं विदूरभवघण्टिकम् ॥ ८६

( I-144 ) पुष्यरागाभिवलभिं पृथ्वीधरजयध्वजम् ।
माणिक्यशीर्षकलशं महिमाढ्यं महोन्नतम् ॥ ८७

( I-144 ) (नव)रत्नहयं सूतो नवरत्नमयं रथम् ।
आनयामास पुरतो विनयावास ईशितुः ॥ ८८

1. रेणु...णे 2. स्थिता 3. स्तां
4. ममिवीक्षिते । 5. गुणनिधिं नीरधिं

(I-145) [1]अतिचक्रोऽतीतहरिदश्वः ख्यातो(रु)सारथिः ।
स सारसहितस्याऽसीत्सर्वनेत्राब्जविस्मयः ॥ ८९

(I-146) नववसुपतिनामख्यातिभीतालकारा-
द्रूकलितविमानाकारधीकृद्र[2]थेन्द्रे ।
वसुविभुपद(भूमौ वन्दि)घोषैस्सहास-
न्विजयजलजनादा वेत्रिहुङ्कारवादाः ॥ ९०

तदानीमेव ९१

(I-147) सन्दर्शनार्थं समयः किलेति
सन्तोषतो राजसु सङ्कुलेषु ।
काषातिकीर्णाः (कलिका इवाऽसन्)
भूषालिमुक्ता भुवि भूरि सक्ताः ॥ ९२

(I-148) अथ वासववैभवो मणिचापशरकलापराजितं मदान्धराजहंसोद्वेजक-कूजितं मञ्जुतर(कञ्जरा)गपुञ्जसञ्जनितमरीचिमञ्जरीसमञ्जससौदा-मनीदामगुम्भितं मौक्तिकवितानदन्तुरान्तरालजृम्भितं मसारसार-किरणधो(रणी)संसारितनीलमेघं निर्मलविभोघं तथाविधं मणिरथ-मधिवसन्नुज्ज्वलितहेतिधरविभ्रममुल्लसितधार्मिकसंभ्रममुन्निद्रपुण्यजन-वाग्विशेषमु(ज्जृम्भित)वाहिनीश्वर[3]रसोन्मेषमुध्धूतकेतनानिलकोला-हलमुन्नतराजराजभजनकौतूहलमुग्रसेनाकलकलमप्यवधानयन्ज-गाम नटदलिस्तोमं नवपिकग्रामं नय(नाभिरामं) नन्दनारामम् ।
९३

तदानीम् ९४

---

1. अभिचक्रो 2. द्रथेन्द्रः
3. वरो

( I-149 ) महीजाता महीजानेस्साष्टाङ्गं सन्नता इव ।
उद्यानबहिरुत्सङ्गमाध्वीमध्यानुबिम्बिताः ॥ ९५

( I-149 ) तदा विभुगणम(कुट)कषणजनितसुवर्णपरागास्सुवर्णपरागैः, कनककदलिकामारुताः कनककदलिकामारुतैः, वन्दिजनकलकण्ठगानानि वर्ण्यतरकलकण्ठगानैः, ततवाद(कसमीरहत)किन्नरीरुतानि किन्नरीरुतैरभेदमासेदुः । ९६

( I-150 ) अथ वेतिनुतो भूभृदवरुह्य रथान्नृपान् ।
अभिप्रेष्य बहिस्सैन्यमाक्रीडं ससखोऽविशत् ॥ ९७

तदात्वे, ९८

( I-151 ) ददर्श (रम्भा न)मिताः फलाढ्या-
श्शुकाऽसुमच्छोभनतोरणानि ।
चूतप्रवालारुणकेतनानि
वसुः (फला) लिश्च [1]वनाग्रदेशे ॥ ९९

( I-152 ) [2]चैत्राञ्चितोपवनसत्रचिरोद्यदिष्टा-
(हा)रा द्विजाश्श्रुतिहि(तालपनै)स्समोदम् ।
शाखाकरैस्समकिरन्क्षितिशक्रमौलौ
मन्दारकेसरशुभाक्षतमण्डलानि ॥ १००

( I-153 ) कल्याणरामकथनाङ्कशुकोक्तिरम्या
वल्लीसतीविततिं(रामसदा)गतेन ।
नीराजनां किसलनीरजरागपात्रै-
र्मुक्तोपमानमुकुलैर्मुहुराचचार ॥ १०१

1. वरागदश
2. चैत्राचित्रवनसत्रचिरोद्यदिष्टा

(I-154) नानाफलानि कतिचिन्नवपल्लवश्री-
पट्टाम्बराणि घन(पुष्पप)रागवन्ति ।
आवालकानि शशिकान्तमयान्यकुर्वन्
राज्ञे मधूपदितराजतपात्रशङ्काम् ॥ १०२

(I-155) राज्ञालिपालिकलकण्ठरवाविलोल-
पत्रांशुकोपरि(विकीर्णसुगं)धरेणुः ।
व्यालोलजालकवती वनकुञ्जगेहा-
द्वल्लीसतीततिरलक्षि सवायुवेगा ॥ १०३

(I-156) तत्राऽतिरागसुमनास्तवनीयवल्ली-
तन्वी समीपजुषि [1]तापमवाप भूपे ।
तस्मा(न्मनो)जभुजतादृशचापमौर्वी
तारस्वराऽसहतरा सपरागपाण्डुः ॥ १०४

(I-157) तादृक्फलस्तनतटं सवयोविलासं
विस्रस्तपल्लवसनं विभुसन्निधाने ।
बन्धश्लथेन (कृतदोह)दधूपधूम-
कैश्येन दाडिमलता[2]रमणी व्यधात्किम् ॥ १०५

(I-158) तदनु तरुणीमणिरचितदोहदविशेषललिताचारवासनाकौशलेन कतिपयल(ताः विभु)कल्पकाय तत्तदामोदगौरवादपारमात्मोप-चारमानुवार[3]माचेरुः । १०६

तथा हि, १०७

---

1. "तर्षमवाप" इति पाठान्तरम् ।
2. कमनिप्यधात्किम् । 3. माचचार ।

(I-158) मन्दं पल्लवपाणियोगमकरोन्माकन्दवल्ली तदा
भूयिष्ठं तिलकाभिरामलतिका भृङ्गेक्षणैरैक्षत ।
सारस्यादधिकं जगौ पिकरवैस्सम्यक्प्रियालुर्लता
कान्ताऽभाषत कर्णिकारलतिका कामं शुकीभाषणैः ॥

किञ्च, १०९

(I-158) मुग्धास्यहेमलतिका मुखरागदाऽभू-
त्पुन्नागवल्यहसदाशु पुरोलतान्तैः ।
सा सिन्धुकालिरकिरच्छवसनं सगन्ध-
मामोदिनी कुरवकावलिरालिलिङ्ग ॥ ११०

तदानीम्, १११

(I-159) वीक्षाहासमृदूक्तिगानविहिताश्वासाभिमर्शानना
सत्त्यालिङ्गनमाननेन कतिचित्सम्भाव्य सालांस्त्रियः ।
हन्तावां कियदत्र चक्रुरिति तौ कङ्केलिकाकेसरौ
भूपाय स्तबकान्तैरनमतां भूयो मरन्दाश्रुलौ ॥ ११२

(I-160) वाप्यम्बुपूर्णवनजारिशिलालवालं
चिक्रोडदष्टफलचित्ररसप्रसारम् ।
राजा ददर्श स तदारचिताम्बुयन्त्र-
स्तम्भोपमं स्तवनवामननारिकेलम् ॥ ११३

(I-161) अगाधमाध्वीतटिनीविगाहि[1]चलपत्र्यगात् ।
जगाम शुक्तिमत्यूर्ध्वनगाधिपश्रियं नृपः ॥ ११४

तदैव ११५

1 चलप्रत्र्यगाति ।

(I-162) तादृङ्नगाग्रतलकिन्नरपक्षियुग्मं
सारस्वरेण सकलोक्ति[2]विदे नृपाय ।
आसन्नमङ्गलमनन्यनरेन्द्रलभ्य-
मावेद्य तद्विभुपदाहतमद्रिमाप ॥ ११६

(I-163) आलोकनीयपतगाद्भुतदर्शनेन
भूलोकनेतुरथ भूरिमुदो जजृम्भे ।
वेलातिलङ्घिविहगारवशोभिलीला
कोलाहलाचलकुलाधिपलोकनेच्छा ॥ ११७

कामाक्षि देवि करुणामयि कामकोटि
काञ्चीपुरीश्वरि कदम्बवनीनिवासे ।
कान्तैकचूतपतिना कलितावधाना
कर्णामृतं कलय काव्यमिदं मदीयम् ॥ ११८

इति श्रीकामाक्षीदासकालहस्तिकविकृतौ
वसुचरित्रे चम्पूकाव्ये
प्रथम आश्वासः

—:*:—

कालहस्तिकविविरचितं

# वसुचरित्रम्

## द्वितीयाश्वासः

कामाक्षि देवि करुणामयि कामकोटि
काञ्चीपुरीश्वरि कदम्बवनीनिवासे ।
कान्तैकचूतपतिना कलितावधाना
कर्णामृतं कलय काव्यमिदं मदीयम् ॥ १

(II-3) तदनु विभुमवादीत्तं वयस्योग्रयायी
तपननिवहतेजा तत्र दृष्टाद्भुतोऽहम् ।
कनदसिततरङ्गान्पश्य कालाभ्रमध्ये
करपथविधया मे कल्पवृक्षाः किलेति ॥ २

(II-4) श्रुत्वाऽवदत्तमिति सूक्ष्मदृशा स दृष्ट्वा
लीलाचलस्स खलु लेखवराश्मकूटम् ।
तत्ते द्रुमा गिरिभवास्तव गीर्भ्रमेऽपि
(सत्यं) तथैव तरवो ननु ते यदस्मात् ॥ ३

(II-5) तत्प्रस्थामणिशोभिनो यदपि तद्वंशा मणीकारणं
तद्वृक्षेषु सुरागता खलु तदङ्कूरास्सुरागा यतः ।
सञ्जीवन्यभिधा लताह्यतनुसञ्जीवप्रदास्तद्गुणा-
स्तस्मिन्यत्प्रसवेषु सिद्धरसता तस्माद्रसास्तादृशाः ॥ ४

(II-5) तत्रत्यमणिसन्तानतरुवल्लीसरोवराः ।
शरासेऽपि निवासेऽपि शाङ्करे सन्ति किं गिरौ ॥ ५

(II-6) क्रीडाचलस्य किल केवलसन्निकृष्टो
लक्ष्याद्रिसम्पदिति लब्धकरावलम्बम् ।
मन्दारसूनमधुमत्तनिलिम्पकान्ता-
सङ्गीत(माध्वि)भरितस्सवयास्तमूचे ॥ ६

(II-7) एकत्रान्यभृतारवालिरितरत्राश्वद्वनीदेवता-
सङ्गीतानि परत्र बर्हिणरुतान्येकत्र कीरारवाः ।
अन्यत्रामरभामिनीततरवा एकत्रशारीस्वना-
स्सान्द्राः कुत्रचिदत्र चारणगिरो येनालिनादाः क्वचित् ॥

(II-7) किं दरीकिन्नरीगीत्या सुन्दरीणामसौ यतः ।
कोलाहलैश्च पूर्णोऽस्मात्कोलाहल इतीरितः ॥ ८

(II-8) सुवर्णदुर्वर्णमणिस्वरूपा
गण्डोपला भान्त्यभितो गिरीन्द्रम् ।
भवत्पदाघातभयापनुत्त्यै
मेर्वादिशैला मिलिता इवैते ॥ ९

(II-9) त्वत्पादघातार्ततरस्तदासौ
कपोतनादार्तरुतक्रमस्य ।
आश्चर्यमद्याप्यतिशीर्णधातो-
र्बिलास्यतो रक्तझरी(रि)वास्य ॥ १०

(II-10) क्षिप्तोऽस्मि तातः क्षितिनाथ धैर्या-
त्पराकृतो मामथ पालयेति ।
महातृणग्राहिमणीगुहास्य-
वातारवैर्वाञ्छति वत्सलोऽसौ ॥ ११

(II-11) अथ तुहिनगिरिवरसन्तानं सन्तानकुसुमवासनासमागतभृङ्गसङ्गीत-भङ्गीतरङ्गतानानूनराजमानगाननिपुणगीर्वाणगाणिक्यपाणीमाणिक्य-वीणाललितराणामृतद्रवीभूतनिस्स्रुतकुरुविन्दकन्दलसलिलमृदुलगैरि-कतलसमुदितकारणगुणविडम्बिविद्रुमाडम्बरमहारुणलतावितानक-लितडोलिकाकेलिकाचतुरसुरसुन्दरीप्रसृतगगनविस्रमरचरणकञ्जमञ्जु-तरमञ्जीरखचितसमुचितगारुडमणिरमणीयकान्तिकुहनादूर्वाङ्कुरजि-घृक्षासम्भ्रमसुदतीपदप्रसारनिवर्तनविपुलतरलांछनीभूतमृगखुराहत-सुधाकरबिम्बनिष्यन्दमानसुधाबिन्दुसन्दोहपतनपुनरङ्कुरितभवदरुण-चरणनिहतिविकलितगरुन्निकरधीकरवारिवाहनिवहं, वारिवाहनिवहा-न्वनमदवारणसमूहा इति सौदामिनीरुपरि परिकीर्णगैरिकपरागा इति गर्जितानि घनबृंहितानीति धिया संहितनियोजितनिशितशर-(परं)परापातेन गलितचलितविशदतदुदरकरकनिकरान् तारतर-मौक्तिकभरा इति समादाय, मोदावहैस्तैरवबाललीलाकुतुकभरशब-रबालाजनानामश्रान्तमृगयापरिश्रान्तिहरणपटुतरपटीरतरुराजिं, पटी-रतरुपटलविटपनिकटकूटकोटिकषणजनितसुरभिलरजोवारैः परिफुल्ल-हल्लकपरागभागैः परिक्षुण्णकाश्मीरकेसरासारैः परिमृदितशैलेयसारैः समभागतया कृतमेलनैरञ्चितगन्धफलिकासुमनियोजनैरनुरागभरक-लितबहुलतररतिपरिश्रमहरणनिपुणैर्गन्धवहनिर्मितैर्गन्धभरपटवासैरा-नन्दपरवशकिंपुरुषसीमन्तिनीनां निवासभूतसेवन्तिकासुमनिकुञ्जं, (से)वन्तिकासुमनिकुञ्जसरदनघहिमसलिलैरापूरितशशिमणिशिला-द्रोणिनिःस्रुतैर्द्रावितशिलातलघ(नी)भूतकस्तूरिकानाभिरक्तैस्सङ्कुम-दपङ्किलैराक्रान्तघनसारकदलिकापरागवेदिकैरतिचिक्कणैररुणकदम्ब-विशेषैरालिप्तविद्याधराङ्गनानामानन्दनटनविलोकनजनितपरितोषभ-रितवनदेवतानिकररचितनियतनीराजनाभाजनशेमुषीकरसूर्यकान्त-फलकं, सूर्यकान्तफलकासमुदितनिबिडहुतवहशिखापटलमिलदन-तिचिरप्रसूतचमरीस्तन्य[1]क्कथनदर्शनेन सविधमुनिजनतपोवनसवन-

भवनप्रवर्ग्यारम्भ इति मुदा समागतबृन्दारकबृन्दशोभमानं, नवरतामोदसिद्धमहिलाकुल [2]मप्यनवरतामोदसिद्धमहिलाकुलं, निशाकरकान्तराजीवरागच्छायमप्यनिशाकरकान्तराजीवरागच्छायं, मेरुभूरिप्रभासमानमपिनमेरुभूरिप्रभासमानमेनं पुनःपुनरालोकयेतिभूलोकनाथं सखा चोदयामास श्रीदयावासः । १२

(II-12) सर्वंसहेश सरसीसविधाभिराम-
सेवन्तिकासुरभिकुञ्जसरत्तुषारैः ।
चन्द्रोपलेषु पतितैस्सहसोत्पतद्भि-
स्सान्द्रो हिमाद्रिरिति सर्वत ईर्यतेऽसौ ॥ १३

(II-13) इती(रित)स्तेन हितेन धीमा-
नारुह्य लीलाचलमाप्तयुक्तः ।
एलानिकुञ्जोल्लसदिन्दुकान्त-
वेद्यां स्थितो गानविलोलकर्णः ॥ १४

(II-14) सुखश्रवे सांद्रसुधासरूपे
सुमालिलीला सुदतीरुतार्ये ।
सुजातनादे सुलभातिमोदे
सुरेन्द्रबन्धुस्सुहृदं बभाषे ॥ १५

(II-15) नादो महानजनि नर्मसख श्रुतः किं
भृङ्गीरवो नु पिकभीरुशुकीरवो नु ।
वीणारवो नु मधुरो विबुधाङ्गनाना-
मानन्दबृन्दविवशस्तमहं न जाने ॥ १६

1: कदन
2 मद्य

(II-16) गानं क्षितौ गायनगायनीनां
नाश्रौषि किं वा नगरे नगारेः ।
नाश्रावि वा गीतिनयो नु सर्व-
मानन्दवृन्दावहमास नैवम् ॥ १७

(II-17) [1]इत्यूचुषीशितरि तं हित इत्यवादी-
त्कस्याश्चिदत्र कलवेणुरवोयमीड्य ।
अश्रावि किं (नु न) सपञ्चमषड्जरीतेः
कूजत्यलं कुतुकिकोकिलकेकिलोकः ॥ १८

तदनु १९

(II-18) चन्द्रकान्तदरीगुम्भन्मन्द्रकान्तप्रतीरणे ।
गीतनादे कृतामोदे जातरागो जगाद सः ॥ २०

(II-19) एतद्दरीषु चिरमीदृगगावलीषु
का वा कुतो ललितगीतिपरा इहेति ।
सम्यग्विचार्य सखिवर्य समागतश्चे-
द्यास्याव एव सहसाऽयतनं तदीयम् ॥ २१

(II-20) इति नृपतिनियोगादिष्टबन्धुर्निकुञ्ज-
न्कनकमणिगृहाढ्यान्कन्दरान् रत्नसानून् ।
गुरुकुतुकमपश्यद्गोस्तनीकायमाना-
न्यपि बिलतलमल्लीवेल्लितांश्चूतपोतान् ॥ २२

तदनु [2]सवयाः वनसीमनि २३

(II-21) चन्द्रांशुसङ्गतिगलज्झरचन्द्रकान्त-
सानुस्थले स्फटिकसंयुतपार्श्वदेशे ।

1. इत्यूचिषि.

2. सवया क्वचसीमनि

सेवन्तिकातुहिनसिन्धुतटे सिताभ्र–
[1]रम्भापरागिणि रसालनमेरुसान्द्रे ॥ २४

(II-21) (मध्येद्राक्षाकायमानं) माधवीमण्टपे(ऽश्रिते । )
(तत्रापश्यद्रम्यदेशं शुकशारीरवाकुलम् ॥ ) २५

तदानीमेव तत्पार्श्वे, २६

(II-22) राशेर्नमेरुरजसां [2]रुचिरे रसाल
शैलावलम्बिनि हिमाम्बुजहल्लकानाम् ।
काश्मीरसेतुजुषि हंसकठोरना(दा)
त्कीरैः परागतिरसूचि हि किन्नरादेः ॥ २७

(II-23) तदनु वसुवीरसखो विद्रुमवितानविरचितगोपानसीविभानुबिम्बरञ्जित वज्रवेदिकाविशेषभूषितं, नीलमणिजालजालकालोककमनीयकालागरु धूपकान्तिकन्दलं, मुक्ताफलनवरङ्गललितकिरणकलितरङ्गवल्लीमोह-नाङ्गणं, गरुडमणिमयद्वारदेशदारुरमणीयघृणीपूरतोरणराजिराजि-ताशाभरं, काञ्चनपाञ्चालिकाकरतलकञ्जरागभाजनराजिनीराजनो-पचारराजमानं, वैडूर्यवलभिशोभायवनिकाभासमानमनुपमानमद्राक्षी-दतिमन्दरं गति(सुन्द)रं कनदिन्दिरं मणिमन्दिरम् । २८

(II-24) मणिगेहं रूप्यभित्ति महादर्शबहिर्भवैः ।
प्रतिबिम्बैः पुरैवा(ऽसी)त्प्रमदास्थितिसूचकम् ॥ २९

(II-25) तारानाथमुखीं तमोघनकचां तालस्तनीं पद्मभां
ताम्रोष्ठीं तरलेक्षणां [3]ततगुरुश्रोणीं तटिद्भासुराम् ।
तन्वीं मध्यतनुं तरङ्गवलिकान्तव्यापरेखालिकां
तत्रैकां तरुणीं ददर्श स तदा तादृक्तरुच्छादितः ॥

1. रम्भापरागज 2. रसिके
3. तरगुरुसश्रोणिं...द्भासुरं

तदनु ३१

(II-26) एलादिवल्लीवृतचन्द्रशाला-
शैलारिसारोपलवेदिबालाम् ।
नीलाभ्रविद्युल्ललितां स्ववीणा-
लीलाकलालोलसखीं स मेने ॥ ३२

(II-27) आर्याऽसौ कबरार्पितात्मसुषमा गौरीसमाख्योदया
वीक्षारोपितलोलताम्बुजकरा श्रीपूरणायागता ।
हासस्थापितपाण्डुता क्षितिमिता गानाय हंसक्रमा
मध्यभ्राजदद्दश्यता ध्रुवतनुस्सम्मोहविद्याऽतनोः ॥ ३३

(II-27) तद्भागुणकलारूपज्ञापनादानयाम्यहम् ।
तं महेशं नगोद्धारं प्रजेशं लोकमोहनम् ॥ ३४

इति कृतमतिरन्तिकमितो हितः क्षितिपतिमवादीत् । ३५

(II-28) सुत्रामतुल्य तवसूक्तिभरैर्विचार्य
चित्ता झरीतटदरीपुटकुञ्जवाटीः ।
तत्रापि कुत्रचन तादृशदिव्यगन्ध-
मित्राभिजातलवलीमिलिते प्रदेशे ॥ ३६

(II-29) कासारतीरकदलीवरपूगपाली-
नारङ्गसङ्गनवगन्ध[1]दरीधरान्तः ।
लीलागृहं कनकलीढमथैक्षि गान-
लोलालिरोधिमणिलोकमयूखसान्द्रम् ॥ ३७

(II-30) तदनु तादृशकेलीमणिमन्दिरे प्रसेवकवृत्तिसमुचितमहितकोलम्बकानां
कन(त्कम)नीयकनककान्तिदानकुशलकलशस्तनीं मेलनराजमान-

1. दरिधमधरान्तः

चित्रितदारुफलकानां रागसम्पन्नियोजननिपुणरम्याङ्गुलीदलां प्राणानु-बन्धबन्धुरताल(ग)तीनामनुग्रहसमर्पकपाणिकङ्कणरुतामत्यक्तसंवाद-समस्वराणां ग्रामप्रदानचतुरालापभङ्गीं प्रचुरतानामृतमूर्च्छनाभिर-चेतनानि सचेतनानि सचेतनान्यचेतनानि च समाकलयन्तीं मुदा तदास्फालिततन्त्रीभरां विद्रावितखेदमुद्रामद्राक्षमेकां वीणाधरां शोणाधराम् । ३८

(II-31) [1]नरेन्द्रविद्याधरकिन्नरेन्द्र-
फणीन्द्रवीणासरणीन्द्रकन्याः ।
धरेन्द्र तुल्या न तया धरण्यां
हरीन्द्रमत्वाऽतिगिरीन्द्रधैर्य ॥ ३९

(II-32) जम्बूनदीकर्दमजातमूषां
सौदामिनीं सारसभूस्सुमेषोः ।
तेजोग्नितप्तां दृढबीजकोशे
संघट्टयन्साधु ससर्ज किं ताम् ॥ ४०

(II-33) अंघ्रिद्वन्द्वमतिप्रवालमचलाभोगा नितम्बस्थली
वक्षोजौ वरभद्रकुम्भसदृशौ वक्त्रं तदब्जोपमम् ।
गण्डौ पाण्डरचन्द्र(खण्ड)गणितौ शैलीमुखश्रीवहा
वीक्षा कञ्जदृशोऽतिनीलविषभृद्वेणी वपुः काञ्चनम् ॥

(II-33) विधिः क्रमेण विद्रुमपल्लवौ विपुलाचलौ कनककलशकरिकुम्भौ कमलशशिबिम्बौ चन्द्रखण्डकर्पूरौ चञ्चरीकसायकौ नीलाहिनीरदौ गाङ्गेयगन्धफलिके च परस्परमनुयोजयंस्तदीयपादादिकेशान्प्रचया-वासो रचयामास । ४२

1. पाठान्तरम् :- नरेशनागेशसुरेशविद्याधरेशवीणाधरणीशकन्या

(II-34) वक्त्राम्बुजाहृतवसुस्वमये कृशेन्दु
मन्दस्मितेन तव मांसलमावहेति ।
सम्प्रार्थ्य सन्ततनता वनिता (इवे)न्दोः
पादारविन्दनखराः प्रविभान्ति तस्याः ॥ ४३

(II-35) कान्तापदे चिरतराश्रयकञ्जरेखा
भूत्वाधिकाश्रि मधुजृम्भणपल्लवानाम् ।
तादृङ्मृदुत्वसुषमे तरसा व्यहार्ष्टां
तस्मात्क्रमेण मृदुतारुणताकृशास्ते ॥ ४४

(II-36) कलमदौहृदकाञ्चनकाहलीः
प्लवरुतैः प्रथयन्मकरश्रियम् ।
अभिसमेत्य निषङ्गमयन् शरै-
र्जयति जाङ्घविभौघ इभीगतेः ॥ ४५

(II-37) रम्भादन्तिकरेषु सत्सु रमणीरम्योरुसाम्याप्तये
दुश्चर्मक्षरणाय तोयकणिकापूर्णोदरेषु क्रमात् ।
त्वग्दोषः कदलीं जहौ वरमरुद्धृत्या चलामुद्धृतां
शुण्डां चेन्न जहौ ततो नु करिणां वैरं कदल्या भुवि ॥

(II 38) सर्वोर्वी समवन्सदोरुजघनद्वीपानि रुच्या लग-
न्सम्भिन्दन्नरिजृम्भणानि सकलक्ष्माभृज्जयं संवहन् ।
सद्वृत्तः परिपूर्णराजकमलश्यामानितम्बो दधौ
काञ्चीकाञ्चनपट्टबन्धमिभराट्कुण्ठाग्रभूमिस्थितः ॥ ४७

(II-39) वक्त्रेन्दुकान्तिकरकान्तपयोघनान्ते
संशोषिबाल्यसरिति व्यरुचन्वराङ्ग्याः ।
वक्षोजवर्तुलशिलावलिशोषरेखा-
मध्याश्रभावकटिसैकतनाभिगर्ताः ॥ ४८

( II-40 ) तद्यौवनातनुविलासवने नितम्ब-
वेद्यञ्चले विवृतनाभ्युरुवापिकारात् ।
रोमालिनीलमणि (रू)ढनवाम्बुयन्त्रा-
[1]त्साधूत्प्लुतौ नु सरसस्तनस्तनगुच्छौ ॥ ४९

( II-41 ) रोमालिधूमजुषि नाभिगुहे विलग्न-
योगिन्यनङ्गमभितोष्य तदात्मताढ्ये ।
सेर्ष्यं कुचोष्ठदगगादतनुत्वमिक्षु-
धर्मस्थितिं विजितशम्बरतां च तस्याः ॥ ५०

( II-42 ) तुल्ये तत्कुचयोः क्षणांशुलिकुचे दुर्गाधिवासेऽपि किं
बाह्यालिप्ररुचिः प्रसेवकयुगी मेरूत्तमाङ्गापि किम् ।
प्रातर्भाम्बुजकुट्मले परिदले चक्रादिरक्त्यापि किं
बर्हिस्तापविशोभिमर्मकलशौ श्रीभाग्रवृत्त्यापि किम् ॥

( II-42) गिरिलिकुचशिखरिवर[2]प्रसेवककुलविबुधगिरिसरसीरुहमुकुलरथचरण-
खगकनकघटकरिकुम्भापेक्षया कान्ताशिरोमणिकुचयोर्महिमागरिमा।

तथा हि ५३

( II-42 ) घनसारान्वितौ श्लक्ष्णौ श्लिष्टावन्तरसङ्गतौ ।
राजन्तौ तौ सदा युक्तौ मितेतररसाविभौ ॥ ५४

( II-43 ) तन्वङ्ग्या हृदयालवालनिवसत्तारुण्यतप्रस्तन-
प्राञ्चत्काञ्चनकुम्भयोः प्रकटिते कामेन कान्त्युत्करे ।
तद्रोमालिशलाकिना निकषजाः कीर्णास्सुवर्णाणवो
बाहामूलविभाः कथं नु परथा दोर्मर्मवल्लीरुचिः ॥ ५५

1. साधूत्पतौ
2. सोयकुल

( II-44 ) सन्मौक्तिकोऽपि समविभ्रमरेखिकोऽपि
तारस्वरो मधुरतन्मृदुनादहैन्यात् ।
कुब्जोऽन्तराक्तविवरः कुलसभ्यशङ्खः
कामं प्रदक्षिणपरः किमु कण्ठलक्ष्म्याः ॥ ५६

( II-45 ) प्रायो विद्रुमबिम्बपाटलमणीबन्धूकगुच्छावली
तत्कान्ताधरसाम्यलिप्सुरिव (तन्नेत्य क्रमादा)हता ।
पाणीबन्धविपाततक्षणपरिस्फोटानगात्सा भृशं
काठिन्यादरुचित्वतो विरसताकाराच्च नैर्गन्ध्यतः ॥

( II-45 ) विद्रुमो विद्रुमस्याऽभूद्बिम्बो बिम्बस्य रल(कः) ।
रलस्य बन्धुजीवस्य बन्धुजीवः प्रियाधरः ॥ ५८

( II 46 ) रामासुधावचस इक्षुरसोऽसमत्वा-
दाद्यन्तसन्ततपराहतिरात्ततापः ।
बद्धातिमध्यमगुणो बहुजन्मनापि
खण्डाप्तिराप न दरं तदखण्डभावम्* ॥ ५९

( II-47 ) सारङ्गस्सकलप्रसूनकुतुकी सर्वात्मनोपेक्षते
मामित्येव विचिन्त्य गन्धफलिका मान्या तपःस्फूर्तितः ।
नासाकारमुपेत्य सर्वसुमनस्सौरभ्ययोगाद्वधू-
चञ्चद्वीक्षणचञ्चरीकपटलीं सम्प्राप किं पार्श्वयोः ॥ ६०

* तन्मञ्जुवाङ्मधुरिमासदृगिक्षुसार-
स्साद्यन्तभङ्गकृशतस्समवाप्ततापः ।
बद्धातिमध्यमगुणो बहुजन्मनाऽपि
सिद्धार्थतोऽपि चिरमाप सखण्डभावम् ॥
एवंप्रकारः श्लोकोप्यत्रैव दृश्यते कुण्डलीकृतः

( II-48 ) [1]असन्निशातत्वमवेगलील-
मुत्सृज्य मारोऽम्बुजमुत्पलञ्च ।
तदीक्षणे भ्रूधनुषा युयोज
तदम्बकख्यातिरभूत्तयोः किम् ॥ ६१

( II-49 ) लोकत्रयीयुवतिलोकजयेन कीर्ति-
रस्या भवेदिति शुभालिकवाचकस्य ।
आद्यन्तयोर्लिखितमात्मभुवा मनोज्ञं
श्रीवर्णरूपमिव तच्छ्रुतियुग्ममास्ते ॥ ६२

( II-50 ) अप्यन्वितोऽभ्रशितिकन्धरसत्समाख्यै-
स्तद्वेणिनिर्जिततरस्तदक्षतरूपः ।
अब्दो नगानवमदस्ति जडात्मनां किं
स्थानं सशब्दगुणपक्षभिदां नटानाम् ॥ ६३

( II-51 ) अङ्घ्री ब्रह्मनिदानवस्तु वरशाल्याश्चर्यजङ्घे कटिं
स्तोतुं नार्हति भूरिवेद्यनुपमां नाभीं सरस्यावलिः ।
सर्वज्ञप्रतिभा च मध्यसरणिं भास्वत्कवीन्द्राः स्तनौ
वक्त्रं पूर्णकलानिधिः फणिवरो वेणीं तदेणीदृशः ॥ ६४

( II-51 ) लब्धवर्ण समाकर्णय भवत ईदृशो विना मादृशां कथं तादृशाङ्ग-
वर्णने निपुणता ज्ञातता वा । ६५

( II-52 ) साराकृत्युपमौक्तिलक्षिततरा श्यामा मनोजाम्बकं
शोभाऽमूल्यमणी सुमाञ्चितलता सूनोल्लसत्कन्दुकः ।
वल्गद्वीचिसुधासरो वरविभाद्वीपो मनोहारिणी
रम्भा सा किसलावलीविलसिता राजन्तवैवोचिता ॥

---

1. अशान्तितातत्वमवैगलील

( II-53 ) कथं तदालीः कथये सराभ
वामेक्षणाया वरटागतायाः ।
विलासवीक्षाविलसद्गतामपै
श्रिता बुधाहीशसुता नु ताः किम् ॥ ६७

( II-54 ) तासां निजालापविधिं तयालं
संशिक्षयन्त्याऽङ्गुलिसंज्ञयैव ।
आस्फालितायामतुलं विपञ्च्या-
मालापमश्रौषममन्दमोदम् ॥ ६८

( II-55 ) स्वेच्छाविहारवनिताजनतासमक्षं
सद्योगतिर्न सरसाऽन्यजनस्य हीति ।
वीक्ष्यातिपुष्पितलताविवरात्तरुण्या
रूपं विवक्षुरनुरूप तवागतोऽस्मि ॥ ६९

इति हितो जगाद मोदमेदुरम् । ७०

( II-56 ) रम्या तदुक्तिरबलारवतोऽपि राज्ञः
कन्यादरीजिगमिषां कलयाञ्चकार ।
आनङ्गचापगुणटङ्कृतिराप्तसूक्त्या
साकं ततान निबिडं सहसानुरागम् ॥ ७१

तदनु ७२

( II-57 ) पूर्वश्रुतेन पुरतश्शुभसूचकेन
विस्रम्भिकिन्नरविहङ्गयुगीरुतेन ।
आनन्दिना क्षितिभृताऽधिकमादृतस्ता-
मादर्शयत्सरणिमाप्तकुलावतंसः ॥ ७३

(II-58) अमीषु शिलातलेषु विपुलेषु सङ्कुमदपङ्कसङ्कुलेषु गमनमनुपपन्नं, वञ्जुलातिमञ्जुले सुमपुञ्जरञ्जितनिकुञ्जयुगलान्तरालपद्यया ऽनया गन्तव्यं, तद्वनं सततमधुवर्षघोरासारसान्द्रतरं तेन दलकुलावरणसाधनवहनकौशलेन यातव्यं, इह सर्वतो गभीरझरभूमावपारतुषारपूरवारः तेन विततेन नवेन सुमप्लवेन जवेन तरणीयः, तत्र शतकोटिसदृशशितकोटिविलसदष्टाङ्गवज्रोपलपटलसानुवलयं तदामूलं लताजालमवलम्बनीयं, राजशिरोमणे विलोक्यतामिदं माणिक्यकन्दरमियं परागारोहभूमिरेतद्धनसारकदलिकातनुकायमानमेषस्सुधाराविशेष एषा ज्योतिर्लतासन्ततिरिदं सिद्धौषधीमहास्थानमदो दिव्यसिद्धाञ्जनरसघुटिकाघटितमन्दिरमयं सकलजनवशीकरणनिपुणमणिराशिरसावनल्पलतिकामण्टपस्तदेव रमणीमणिरमणीयलीलासदनमिति राज्ञे सखा चिरं प्रज्ञापरावासो विज्ञापयामास । ७४

तदनु, ७५

(II-60) **सतीमचलसञ्जातां सहर्षं राजमौलिवत् ।**
**सखीरितसरण्या तां सतीं द्रष्टुं ययौ विभुः ॥** ७६

(II-59) पङ्कजलोचने प्रथितोन्मेषशालिन्या एतत्पद्मिन्या इनकरकौतुकावाप्तिरिदानीमेव भवेत् , मञ्जुवाणि महिततरवयोविभवाया महिलालताया घनासन्नपुन्नागविहारो [1]घटेतातिजवेन, ललनाशिरोमणे ललितामोदमेदुराया एतल्लसत्पल्लवपञ्चशाखाया राजसारङ्गयोगो लभेदतिरयेण, भुवनसुन्दरि भुवनाभिनन्द्याया एतन्नुतरुचिसरस्युत्तमाया मानसप्रियलीला महावेगेन लगेदिति परस्परं भाषमाणवनपालिकापुष्पलाविकावचनामृतानि समाकलय्य वरोपश्रुतिपरम्परा किमश्रावीति नर्मसखेन बोधितो महानन्दपूरितो निकामं स राजा रराज ।

1. घटेदतिजवेन

तदनु ७८

( II-61 ) गाङ्गेयपूर्णकुम्भैश्च गारुडोपलतोरणैः ।
कल्याणगौरवं राज्ञे कन्यागृहमसूचयत् ॥ ७९

( II-62 ) कन्यामणिं कनकरत्नकनन्निशान्त-
प्रान्तावनौ स निवसन्प्रभुराददर्श ।
प्राचीनवल्लिपिहितप्ररुतालिपालि-
पक्षानिलातिचलपल्लवजालमार्गैः ॥ ८०

अथ क्रमक्रमेण, ८१

( II-63 ) तस्य नेत्रे पूर्णकामे ततोऽप्येवं हृदद्भुतम् ।
अङ्गं रसोत्तरङ्गं द्रागभूदमितमीप्सितम् ॥ ८२

( II-64 ) आदौ समीक्षितुमिमामनिमेषताशः
पश्चात्तदाननिशापतिदर्शनेन ।
एषोऽनिमेषपतिभावमियेष भूपाः
काम्योत्तरोत्तरपदाधिककांक्षिणो हि ॥ ८३

( II-65 ) तन्व्याः पदं प्रथमतस्तदनूरुसीमां
काञ्चीमथेत्य कमनीयमहीशवीक्षा ।
पश्चात्पयोधरसुदुर्गपरायणाऽसी-
च्चक्रातिशासनचणोच्चपदं हि काम्यम् ॥ ८४

( II-66 ) नाभीसुरङ्गकवलितयनामहेम-
निश्रेणिरोमलतिकागुणतस्तदीक्षा ।
आक्रान्तभीरुकुचदुर्गभराऽस किं वा
साध्यं न सङ्गरसमोदविनिद्रवृत्तेः ॥ ८५

(II-67) दृष्टिर्विभोस्सुरभिले तिलकाञ्चिते सा
रामानने स्मितसुमाश्चति लम्बमाना ।
गण्डस्थलाद्विधुशिलामसृणाद्गलन्ती
व्यालम्बते स्म कचभारलतावितानम् ॥ ८६

(II-68) तस्याः पल्लवितुं पदाच्छुभमहारम्भाप्तये सक्थितो
हस्तिस्कन्धसमाश्रयाय जघनान्मध्यान्नभोलब्धये ।
शैलाधीशजयाय तुङ्गकुचतश्शङ्खोपसत्त्यै गला-
दोष्ठादिष्टफलार्जनाय ललितश्रीपूर्तये कर्णतः ॥ ८७

(II-68) मान्याननात्पूर्णराजमण्डलेश्वरताप्तये ।
प्रभुवीक्षा क्षमा कैश्यात्प्राप्त्यै च घनसम्पदाम् ॥ ८८

(II-69) अद्वैतरागजलधाववाङ्मनसगोचरे ।
मज्जन्स तद्रूपनुतिं मनसा विस्मितोऽकरोत् ॥ ८९

(II-70) ख्याता वाऽलकनामतो भ्रमरका स्फीता घनश्रीकरा-
त्कञ्जातारिमुखादराद्विधुरभूत्किं जातसन्मित्रकः ।
छायात्वान्मधुराधरस्य युवतेरायान्नु बिम्बं प्रथां
तुङ्गोगोरोजसनाभितानुसरणात्किं गोत्रवर्गाधराः ॥ ९०

(II-70) स्वजस्समाना हि गुणैर्भुजाभ्यां
चक्रं स्वरक्ष्यं नु नितम्बलक्ष्म्याः ।
सरोवराण्यङ्घ्रिसमोदराणि
नखाभिजाता प्रसवालिरस्याः ॥ ९१

(II-71) भ्रूचापदक्छरभृता वनितामुखेन
कामं जितात्स्मितकपोलललाटभासा ।

चन्द्रात्सुधाच्छविकलासु (हृतासु) भीत्या
पश्चाद्गतं घनतमःपटलं नु कैश्यम् ॥ ९२

(II-72) तस्याः कुचाचलतटाग्रतलाश्रयस्य
विद्युल्लताभरणदीप्तिविभासुरस्य ।
आरावमूकितपिकस्य हृताब्जपूग-
कान्तेर्गलस्य न किमर्हति कन्धराङ्कः ।  ९३

(II-73) कन्दर्पमत्तकरिणि स्तनशैलवप्र-
क्रीडाश्रमेण कृतनाभिसरोऽवगाहे ।
उद्वेलवीचिवलयो(ऽभवद्)न्तराले
[1]तद्गन्धसङ्कचलिततिर्ननु रोमराजिः ॥ ९४

(II-74) नारीकुचाचलभवैर्नतनाभिपूर्णै-
स्तच्छ्रोणिचक्रनिहतेस्तरसोरुभिन्नैः ।
अश्रान्तगर्भकलमौ नवभाऽमृतौघै-
र्जङ्घे हि दण्डहलचिह्नपदाग्रजातौ ॥ ९५

( II-75 ) रामामणीतनुलतारमणीयशोभा-
भूमावलोकनुतिविस्मयभूरिहर्षः ।
आलोलमौलिकमनन्यमनास्स पाणि-
सामर्थ्यमेव मनुते स्म सरोजयोनेः ॥ ९६

( II-76) तदा सखोपांशु तमावभाषे
तथ्यं वचो मे तरुणी हि दृष्टा ।
तज्जन्म पृष्ट्वाऽऽशु तपस्विवेष-
स्त ईरयाणीति ततस्स हृष्टः ॥ ९७

1. तद्गन्धसन्यतिपति

(II-77) कुम्भस्तनीलग्नवीक्षां कुम्भदीपविभानिभाम् ।
पयोजदृक्प्रसङ्गेन युयोज सुहृदा विभुः ॥ ९८

(II-78) कथं महिम्ना सह योगिवेषः
कथं विविक्ताङ्गनया सहोक्तिः ।
कथं लगेत्कार्यमितीरितस्स-
न्कर्ता सखा तत्कलनापरोऽभूत् ॥ ९९

तदानीमेव तस्मिन् शैले । १००

(II-79) भूरिस्वर्णलताजटस्सुमरजोभूतिश्शिफायष्टिमा-
नश्वत्पल्लवशाटिरच्छकलिकामुक्ताक्षस्रग्लोज्वलः ।
वल्गद्वल्कलयोगपट्टभृदटत्किञ्जल्कमौञ्जी लस-
न्कश्चिद्व्याजजटी फलाम्बुकरकी कल्पद्रुभूम्नाऽस सः ॥

(II-80) मायाजटी जपसरव्यायामचलिताङ्गुलिः ।
आयादरं हेमधाम गेयादरमिभागतेः ॥ १०२

कुहनायोगिसमागमनमविज्ञायैव कुतुकेन स्वेच्छाविहारसल्लपनासु सखीषु काचिदूचे । १०३

(II-81) असत्सखीमणिसमञ्चितगीतिरीते-
रायास्यतीह सह साधु मुदा यतीति ।
इत्यालिवागव(हितं) हितमाकलय्य
तत्कुञ्जगः कपटतापस एवमूचे ॥ १०४

(II-82) साधूत्पलाक्षि तव सारगिरास्मि हृष्टो
यत्यागतिः कथमबोधि य ईदृशोऽस्याः ।
वीणारवामृतविकासिमनास्स दृष्ट्वा
कान्ताशिषं न कलयन्न हि यास्यतीति ॥ १०५

तदा तत्रत्यास्सर्वाश्च शुश्रुवुस्तद्वचनं, कुहनातपस्वीच कुञ्जान्निर-
गात् । १०६

(II-83) तपस्विवर्यागमनं तदात्वे
विज्ञाय तद्विस्मयसम्भ्रमाभिः ।
मुक्तासनाभिर्मुनिरैक्षि ताभि-
र्ननन्द राजा हृदि नर्ममित्रम् ॥ १०७

तदानीमेव, १०८

(II-84) आयाति योगिनि हठादवरूढपीठ-
कान्ताकुचाद्रिभरकम्पिकृशावलग्नम् ।
दृष्ट्वा नना(ह) नृपतिस्सदृढानुकम्पं
देशाधिपा जगति दीनदयादृशो हि ॥ १०९

(II-85) अत्युन्नतस्तनभरा (चाऽ)वनादेकपार्श्वतः ।
आनमत्सादरं साकमालीभिर्मुनयेऽथ सा ॥ ११०

(II-86) अथ तदानीमप्रतिमनवतपोधनं रमणीरचितविविधविनयपूजाविजृम्भ-
माणं तरुणीमणिसमर्पिततपनीयपीठमधिवसन्तं नववसन्तमनन्य-
कन्यासामान्यलावण्यभासुरे ललितविभवसुवल्लभकलितकरग्रहा भवेति
धरसुतायै विरचिताशिषं तापसानुज्ञासमलङ्कृतमणिखचितसमुचिता-
सना(सीना)सु कञ्जलोचनासु समञ्जसवचनवैखरीरञ्जिता खञ्जन-
मदभञ्जनलोचना घनाञ्जननीलवेणी मञ्जुवाणी साञ्जलिरिति सञ्ज-
गाद मनुपञ्जरं मुनिकुञ्जरम् । १११

(II-87) कुतो महात्मन्कगताविहागा
स्ससख्या भवत्पादनखेन्दुसक्तया ।
अभूत्प्रकाशोऽथ हतं तमोऽस्या
भव्याः कलाभाग्यमनन्यलभ्यम् ॥ ११२

(II-88) उत्कृष्ट ते पदनतं शिर उत्तमाङ्गं
राजद्भवन्नुतिपरा रसना रसज्ञा ।
युष्मत्समर्चनविभावनयोग्यकालो
दिष्टोत्तमो भवति शिष्टजनस्य लोके ॥ ११३

(II-89) शोणाधरामणीवीणाराणाधिकमुदां हृदा ।
वरसंयोजनायातो वरनादप्रियोऽसि किम् ॥ ११४

(II-90) सर्वज्ञ तापसमणे सदनन्तरत्न-
शोभाढ्य तावकशुभाङ्कसुवर्णभूम्ना ।
मोदादलङ्कुरु चतुर्मुखतुल्यभाव
मान्यप्रभावघन मा(मक)कर्णसीमाम् ॥ ११५

(II-91) उक्तस्तया मुनिरुवाच जगत्प्रसिद्ध-
पुण्यार्यगौतमकुलाम्बुधिपूर्णचन्द्रः ।
गौरीमनोहरमना नवगौतमाख्यो
हर्षाम्बुधिः परमहासरसोऽहमेवम् ॥ ११६

(II-92) लोलमीनयुगलीललोचने
राधनीयवसुनाथसेविनः ।
अस्य तद्धनरसास्यमन्त्रतो
मौनिता मम हि मानिता चिरात् ॥ ११७

अपि च, ११८

(II-93) अचलाहितपादोऽदादावाल्यं सेवनादिनः ।
आत्मानुस्मृतिभूमानमखिलेऽपि पदे मम ॥ ११९

(II-94) तेनोद्यानगतेन मेरुललितच्छायोज्ज्वलस्वामिना
नित्यालोकितनीलकण्ठसुमनोभूमाभिरामालयः ।

राजत्पुष्करतीर्थसम्भ्रमपरो रम्भादिलास्यादरो
माद्यत्किन्नरमञ्जुगानकुतुकश्शीताद्रिसीमामगाम् ॥

तदनु, १२१

( II-94 ) श्रीपुण्डरीककेदारसेतुदर्शनविस्मितः ।
विशिष्य चम्पकारण्यं विलोक्यैवमिहागतः ॥ १२२

इदानीं, १२३

( II-95 ) दरीझरीसारससौरभस्फुर-
द्गिरीशसक्ते नवपद्मिनीप्रिये ।
तथाविधोपायनयोजने मनो-
रथादिहागां नवपद्मिनीघने ॥ १२४

किं च, १२५

( II-96 ) कन्यामिमां गुणमणीधन्यां रमणि पश्यतः ।
अनुकम्पाऽत्र वात्सल्यमद्भुतं च ममैधते ॥ १२६

( II-97 ) सौभाग्यलक्षणवती स्मरराज्यलक्ष्मीः
कान्तामणीयमचलाधिपकन्यकेति ।
संलक्ष्यते मनसि सिन्धुकुमारिकेति
गोत्रोन्नतिं सखि वदेति स तामवादीत् ॥ १२७

( II-98 ) याद‍ृच्छिकार्थकुहनायतिसाधुसूक्त्या
पर्याप्तविस्मयपरस्परवीक्षितास्याः ।
अब्जानना मुनिमहत्त्वमवर्णयंस्ता
विश्वासभासुरविकस्वरमानसाब्जाः ॥ १२८

( II-99 ) मौनीशमाह महिलास्वथ मञ्जुवाणी
भक्त्यार्य लोकभरणाभरणेन भूम्ना ।

सर्वज्ञतामधिजु(ष)स्सकलोन्नतस्य
किं चित्रमित्यखिललोककथोपलब्धौ ॥ १२९

(II-100) सौभाग्यलक्षणवती स्मरराज्यलक्ष्मीः
कन्यामणीयमचलाधिपकन्यकेति ।
संलक्ष्यते मनसि सिन्धुकुमारिकेति
ह्युक्त्वाऽपि वत्सलतयैष किलानुयोगः ॥ १३०

(II-101) ततस्त्वदीयदयया तरुणीजन्म वर्ण्यते ।
तच्छ्रूयतां तापसेति तत्सखी तु जगाद सा ॥ १३१

(II-102) अस्ति क्षोणितले वसुक्षितिपतिः प्रौढप्रतापानल-
ज्वालालीमरुभूतसिन्धुविचलन्मैनाकपक्षच्छिदा ।
नानादिक्तटभेदिदुन्दुभिमहानादेन [1]संमूर्च्छता
सानन्देन नगारिणा नुतयशास्सर्वज्ञचूडामणे ॥ १३२

(II-103) आसीदधिष्ठानपुरी चिरश्री-
रानन्दिनी द्यौरिव तस्य जिष्णोः ।
आक्रीडसूनासवपूरगुम्भ-
दत्यन्तमाधुर्यगपुण्ड्रवाटी ॥ १३३

(II-104) उपकण्ठं पुरमणेरुरुमौक्तिकहारवत् ।
उद्दामरुचिरा भाति हृद्या शुक्तिमतीनदी ॥ १३४

(II-105) यज्जीवनं कविविनोदि यदन्तरङ्ग-
मच्छं गभीरमतिपावनमर्थदायि ।
धात्रीत्रिकालफलदा गतयो यदीया
मुक्तालिविभ्रमभरा हि यदब्जलीलाः ॥ १३५

1. संमूर्छता

ततस्तदर्णववरवर्णिनीमहिमा लब्धवर्णेन क(थं) वा वर्णनीयः । १३६

(II-106) श्लिष्टा नर्मदयाऽनुकूलविहृतिश्रीजीवनस्निग्धया
कल्याणोर्मिककङ्कणाङ्कितकरा लम्बोल्लसद्वाहुदा ।
तादृक्सम्भ्रमरम्यरावघनया (त)द्वेलवत्या नुता
सद्गम्भीररसाभिगुम्भितसरस्वत्युक्तिसाधूत्तरा ॥ १३७

(II-106) वंशरूपगुणोत्कर्षा वाहिनीबृन्दवन्दिता ।
वनजातासनसभां वनिताऽऽकृतिराप सा ॥ १३८

(II-107) सखीयुता सरोजातमुखी हंसगता विधौ ।
प्रवर्तितनिजाचारा न्यवर्तत ततो नदी ॥ १३९

तदानीमेव धातृसेवावसरमवधाय तद्विवन्दिषया , १४०

(II-108) राराजत्सुमनोमनोहरशिखो रत्ना(लि)चित्राम्बर-
श्मृङ्गाराभियुतस्सिताभ्रतिलकश्शोणाश्मदन्तोज्वलः ।
विघ्नास्यो महितोपकण्ठविवलन्नक्षत्रमालाञ्चितो
भास्वत्सङ्कुमदा[1]द्रगण्डफलको भर्मोल्लसन्मेखलः॥ १४१

(II-108) कोलाहलधराधीशः कुतुकी हरिचन्दनी ।
माणिक्यपादवलयो मानिन्यभिमुखोऽभवत् ॥ १४२

तदनु, १४३

(II-109) शैलाधिराजतनयस्य शिवानुजस्य
शूलायुधप्रियतमस्य शुभोन्नतस्य ।
कोलाहलावनिभृतः कुचशैललीला
बालाऽनुकूलविनयाऽजनि पार्श्वलोला ॥ १४४

1. द्रदण्डफलको

(II-110) कूर्माङ्घ्रिर्निजकूलरूढकदलीच्छायो(रु)का सैकत-
श्रोण्यम्बुभ्रमनाभिरूर्मिवलिका शैवालरोमावलिः ।
चक्रोरोजयुगी सरोरुहमुखी चारूत्पलाक्षी नदी
तन्वी भृङ्गकचा बभूव ललितैस्तद्धैर्यव(र्मापि)हा ॥१४५

(II-111) तद्धैर्यं सर्वमाहृत्य तटिनीमणिरागता ।
सोऽपि सिन्धुगभीरोन्तस्तद्विलासं वहन्नयौ ॥ १४६

(II-112) श्रीशोभितशिखरिराजसुतस्तदादि
तादृङ्मनोज्ञतटिनीस्मृतितन्मयस्सन् ।
उद्यद्रसो भ्रमभृदुत्कलिकातिलोलः
कामोज्ज्वलस्समभवत्कमलाभिपूर्णः ॥ १४७

अपि च, १४८

(II-113) आसीन्नितान्तमहहाऽतनुतापकीला-
तप्तो हिमाद्रितनयो झरबाष्पपूर्णः ।
तद्ध्याननिश्चलतरो गहनाभिराम-
रोमाञ्चकञ्चुकविशेषसमञ्चिताङ्गः ॥ १४९

तदैव तद्वशेन तदीयास्तरलाश्रया बभूवुः । १५०

(II-113) रम्भाद्या घनकूटगा रहितसारस्या नमन्मस्तकाः
श्लिष्यन्त्यः कलकण्ठ्य इध्दकुतुकाश्शीर्णा विशीर्णारवाः ।
[1]पद्मिन्योऽहरफुल्लपत्रनिचया दैन्यातिखिन्नानना
भोगिन्योऽस्य बभूवुरञ्चितमहाभोगा व्यथोऽल्लासिकाः॥

किं च, १५२

1. पद्मि.......ल्लसत्वलिचया

(II-114) भूभृत्सुतस्य भुवनाभिनुतास्मृतेर्द्रा-
गन्तः(स्म)रध्वजविवल्गनहंसधाव्यः ।
पद्मोत्पलच्छदशिलीमुखमण्डलाग्रै-
स्सान्द्रास्सहैव महिमा स हि माननीयः ॥ १५३

(II-115) तटभिज्झरिजातानां शताराणां [1]किमद्भुतम् ।
(स्म)रसारसबाणानां धरसारविदारणे ॥ १५४

(II-116) नान्यैश्शशाम नयशालिघनालिनीत-
नद्यञ्चितामृतभरान्नगतापवह्निः ।
पाटीरनीरघनसारतुषारसार-
तारालिदारमणिवारझरादिपूरैः ॥ १५५

एवमेव, १५६

(II 117) माद्यद्वनीशुकपिकालि[2]शिखावलाली-
मञ्जुस्वानासहमना मदनास्त्रदूनः ।
अश्वान्नदीरसभराप्लवनादृते त-
त्सौख्यं कथं नु भवितेति स निश्चितात्मा ॥ १५७

(II-118) धराधरसु(तो) दीप्तिकराभरणभासुरः ।
धरावरमणीमालां चिरादरमगान्नदीम् ॥ १५८

तदानीं क्रमेण, १५९

(II-119) पद्माभिराममणिपालसत्पराग-
श्रीगन्धकेसरशुभाक्षतवीचि(पाणिः) ।

1. किमद्यतम्    2. मदावलाली

(आ)तीरपूरकनदुत्कलिकाभियाना
तस्मै ततान तटिनीतरुणी सपर्याम् ॥ १६०

(II-120) तटरत्नासनासीनस्ततो गिरिरगान्मुदम् ।
श्रिततद्वाहिनीभूतिः श्रीपद्मनिधि(लाभ)तः ॥ १६१

(II-121) तदानीं पुण्यतरङ्गिणीमणिः शिखरिणमभाणीत् । १६२

(II-122) नद्यालीजनकस्य ते नगमणे नव्यार्घ्यतोयं किय-
न्नीहाराचलजन्मनस्सुरभिलं नीहारपाद्यं कियत् ।
मन्दारस्तबकोज्ज्वलस्य महतो माल्यार्पणं वा किय-
द्रत्नाधारगुरुश्रियः स्वकलि(तो र)त्नोपहारः कियान् ॥

गोत्रतिलक गोत्रातले १६४

(II-122) पूर्यते न हि केनाऽपि पूजाऽद्रिमहतां तथा ।
पुष्पपत्रोदकैर्भक्तिपूर्वं दत्तैः प्रसीद मे ॥ १६५

(II-123) रत्नकूटसुरराजकन्यका-
कल्पभूरुहसुधाकरह्रदैः ।
भासुरस्य भवतो जगत्त्रये
काम्यवस्तु कमनीयमस्ति किम् ॥ १६६

(II-124) एतादृशगुणोपेतशीताचलसुताऽगतिः ।
स्फीतामितानुरागश्रीजातातिशयतो मयि ॥ १६७

(II-125) इत्यादृतस्स तरुणीमणिमेवमूचे
स्मेराननो रदनहीररुचिप्रचारः ।
विज्ञातविश्वभुवनाशयसन्निवेशे
स[म्य]ग्यथार्थमवदस्सरसाग्रगण्ये ॥ १६८

(II-126) सामोदमब्जजसमागमने युतालीं
त्वां वीक्ष्य चिन्तनपरोऽस्मि ततानुरा(गात्) ।
(अच्छाच्छतासरस)तातिगभीरभावां
सर्वंकषत्वपरिपूर्णतरत्वरम्याम् ॥ १६९

(II-127) तत्पद्मभूसदसि त्वादृशसिन्धुकान्ताः
किन्नो गता(गत)पराः किमदृष्टपूर्वाः ।
तद्वीक्षणात्त्वदवलोकनजो न मोदः
प्राग्जन्महार्दमयि किं बहुना मयीदम् ॥ १७०

(II-128) मत्तोऽनवेक्ष्य कुतुकं मधुरं न चैष-
दाभाष्य केवलमरालगता त्वमासीः ।
आराद्वसेयमथ वागमृतं पिबेयं
गत्या कयाऽहमिति नित्यमनोरथोऽस्मि ॥ १७१

(II-129) अमलमधुरचेतोहारिगुम्भद्रसाढ्यान्
स्तुतमतिरतिदूरं स्तौति गत्वा बुधालिः ।
इति विदितविशेषो हेलयैवागतोऽहं
विदलितगतिखेदो विश्वतापापहन्त्रि ॥ १७२

(II-130) मज्जीवनं तव नियोज्य महान्तरङ्ग-
मञ्चत्प्रियाचरणमाकलये किमुक्तया ।
चक्रस्तनि भ्रमरवेणि चकोरनेत्रे
नालीकसन्मुखि न दीनममुं विधेहि ॥ १७३

(II-131) तदा वदन्तमूचे सा तं घनस्वनिताऽविला ।
मुकुलीकृतहस्ताब्जा मुद्रीतिविनयान्विता ॥ १७४

(II-132) यानं नीचातिनीचानुसरणमखिलं जाड्यकल्पो निसर्गो
गाम्भीर्यव्याप्तिहीना सततमुपचितिः पङ्कभागाशयो मे ।

अत्यन्तं दुर्दिनोत्थो निरवधिरुदयो जीवनं बुद्बुदाश्च-
त्कौटिल्याधारसीमा गतिरधिकतरोत्सेकसङ्गोऽतिभङ्गः ॥

(II-132) अचलितोन्नतधैर्य महामतेऽ
नघगते सदभङ्गनिसर्ग ते ।
अहह सङ्गतिरर्हति मादृशै-
रनियतस्थितिगन्धगुणैः कथम् ॥ १७६

किं च, १७७

(II-133) क्वाऽचला जडवाहिन्यः क्व वाऽथ जगतीदृशाम् ।
क्व सख्यमुन्नतारोहः क्व महात्मन् रसश्च नः ॥ १७८

(II-134) आकर्ण्य तद्वचनमद्रिरुवाच सिन्धुं
मग्नोऽस्मि ते तटिनि मञ्जुलकान्तिपूरे ।
किं मां भ्रमैस्तुदसि किन्तु दृढोपगूढं
हर्षप्लवं नयसि हार्ददयाधियेति ॥ १७९

(तदाकर्ण्य सापि सदा)शया विवर्णाऽजनि । १८०

(II-135) तं प्राह साऽथ ननु तामरसास्त्रखिन्नः
किं नात्मनः स्मरसि गौरवतुङ्गभावौ ।
(मा)दृग्जलस्थितिमहाप्लवखेलनं ते
किं लाघवाय न कुलाद्रिकुले स्मरेति ॥ १८१

(II-136) क्रीडामतिर्यदि दृढा कृतपुण्यदेश-
वासे तपःस्थितिकृशे वनराशिभाजि ।
हा हन्त मादृशि हठाक्रमणं किमर्हं
रम्भादयो जगति रम्यतरा न किं ते ॥ १८२

इति वदन्तीं स्रवन्तीं रसाधरपती रागान्धलोचनस्सन्नीरयामास-
गीरयावासः । १८३

(II-137) जाता त्वाऽतनुभूतयः किमु जटास्यूताभ्रसिन्धोर्विभो-
यीता किं यमुनापतेर्यदुपतेः स्फीतात्मवंशप्रथा ।
हीना किं वसुपूर्ति[1]रच्युतपदीदीनात्मनश्शन्तनो-
र्न्यूना किं कमलोदयात्प्रिकदधेर्नानास्रवन्तीपतेः ॥

(II-137) तेषां यच्छ्लाघवं तन्मे ते वृथानियमैरलम् ।
विलम्बसे कियद्वेति विवशो जगृहे स ताम् ॥ १८५

(II-137) तदानीं पर्वताधीश्वरप्रबलतरदीर्घशाखाभुजागृहीतकमलालिवासस्थिते-
स्ससम्भ्रमायास्तटिन्याः, १८६

(II-138) वेणी चचाल बिसवद्भुजकङ्कणानां
श्रेणी ननर्त विबभुश्शफरीकटाक्षाः ।
नाणीयसी परिरराण च हंसकाली
श्रोणीलसत्पुलिनसाचितमब्जवक्त्रम् ॥ १८७

(II-139) अक्षोभ्यशम्बरमयातिशयाभिपूर्णाः
कूलङ्कषानुपमगर्वकृताधिवासाः ।
कान्तानुकूल्यकलिताः [2]प्रतिकूलताऽथ
किं वेति कोपभरितः कितवो बभूव ॥ १८८

(II-140) तदनु शिखरी कोपरक्ताननो निजरूपाटोपदर्शनजनितसाध्वसां
तामालोकयन्नुन्मस्तकानुरागभरितो निरतिशयरतिरमणनिशितशर-

1 रच्युतनदी
2 प्रतिकूलतात

परम्पराऽतनुवेदनानिबिडनिश्वासधूमशङ्काकरैर्धाराधरैः कनकमल-निकरकलहंसजालं विचालयन्, पार्विकशर्वरीशसमागमकलित-विरहपाण्डिमधीकृता शशधरशिलाविभासिसान्द्रचन्द्रिकया तुङ्गतर-तरङ्गडोलिकासङ्गकेलिकाभङ्गरथाङ्गविहङ्गपृथुकसन्तोषं संशोषयन्, बहुलतरानुरागविवलदलसतारचितगद्गदनिनदसदृशीभिस्सरयचङ्क्र-मणचलितवलभिदुपलफलकमिलदधिकतमधुमधुमाभेटीभिर्निकटतट-विटपिपटलरटदमितकुतुकभरकीरकिन्नरयुगानश्रायने विश्रामयन्, निजाहार्यभावगौरवे कल्लोलिनीरयनिवारणे कामोपभोगसमुचित-विजनताकारणे कन्दर्पबलसम्बाधबाधावधीरणे जनित(तापः) रचय सुरतमिति तटिनीपदानत इव [1]तदधोविलम्बमानो दृढतरं परिरम्भयन्, विशीर्णित(र)हल्लकामोदं वेणीं विलोलयन्, विकलित मकरिकोत्सेकं विशदगण्डपालिकां विमर्शयन्, विचलितमधुरामृतं विलसदुल्लोलाधरं विदंशयन्, विगलितमुक्ताफलं विततपयोधरं विमर्दयन्, विघटितविशदांशुकान्तं विपुलपुलिनजघने विहितोत्पल-पत्राणि विस्तारयन्, साहित्यकुतुकी सौहित्यरहितो महाब्धिधो रहो मुग्धामधिकतरकालमतिशयाभीलं [2]धीरयावासो वारयामास ।

(II-141) वज्रिप्रताप वसुभूप दयास्वरूप
रक्षार्तरक्षणविचक्षण मामितीव ।
[3]तारस्वरोऽजनि निरुद्धधुनीरुतेः प्राक्
तद्घोरनीरखगवारततारवोऽभूत् ॥ १९०

(II-142) अत्यन्तघोरवरटादिवयोरवात्प्रा-
क्छैलोद्धतप्रबलशैवलिनीजलेषु ।

---

1 तथा धो

2 धीरयामासो

3 तारस्वरोजनिधुनिसुतः

आक्रान्तसद्मसु नृणामतिपीडितानां-
माक्रन्दबृन्दमहहाऽजनि दिक्षु तादृक् ॥ १९१

(II-143) .... .... .... .... ।
.... .... .... .... ॥ १९२

(II-144) नानानीवृत्पुरग्राम[1]स्थाना द्रागेत्य तत्क्षणे ।
भूनायकं वसुं प्राहुर्दीना गिरिभयाज्जनाः ॥ १९३

(II-145) इष्टं निर्वहते मलीमसगतिं नोपैति भीत्या शुचि-
र्दाक्षिण्यं भजते सदागतिरलं गुम्भद्रजा नाटति ।
तेजो योजयितेव [2]चण्डकिरणैश्शक्तिं न मित्रोऽयते
लोके जीवनदो न गर्जति घनो धान्यातिमान्यागतिः ॥

(II-145) बुधादृत त्वत्करुणासुधासुखितभूतले ।
दधावद्य नदीकान्ता व्यथामाशु विचारय ॥ १९५

(II-149) हा हन्त कश्चिदवनीभृदतीषुवेग-
मत्युद्धतध्वनिकरो नु समागतस्सन् ।
व्यालम्बते स विततार्भटि शुक्तिमत्यां
विन्ध्याद्रिवज्जगति विस्तृततुङ्गशृङ्गः ॥ १९६

(II-147) स्थिरा[3]जनदराधार[4]धरागतिभरासहा ।
[5]धराधरदरायाततरा भ्रमपरा (हि) सा ॥ १९७

(II-148) वाच्यानु किं वसुविभो बहुभीतिरद्रि-
[6]वर्योपरोधबहुवर्धितसिन्धुपूरैः ।

1 स्थानादागत्य
2 चन्दनकरवा
3 जननराधार
4 धारागति
5 धराविदरायातत्परा
6 वरोभयनवर्धितसिन्धुपूरैः

आपूरितावनितले स्फुरदभ्ररूप-
माकाशपातवदट्टश्यत हन्त भीत्या ॥ १९८

किञ्च, १९९

(II-149) भूचक्रं निखिलं जडं भृशमभूद्ग्रामावली भङ्गभा-
गत्यन्ताऽवनशून्यमालयकुलं काण्डैकशेषा द्रुमाः ।
सत्वानामपि वारिता विहृतयस्सर्वं च वस्तूज्झरं
जीवाः कण्ठगजीवना हि कलमालयप्राप्तताद्दक्फला ॥

तथाऽपि गोत्रासुत्रामन् २०१

(II-149) निष्कुटारामगोष्ठादिनिःस्पृहा वयमागताः ।
भवत्पदाम्बुजालोकभाग्यात्स्वामिन्कथश्चन ॥ २०२

(II-150) विज्ञापितस्तैरिति विश्वरक्षा-
राजन्महोत्साहरसारुणाक्षः ।
स लोकपीडाहृतिसाधकभ्रू-
भङ्गेन्द्रकेतुर्गिरिभञ्जनोत्कः ॥ २०३

(II-151) [1]कराभयभराधायी धरापतिररातिहा ।
पुरा करिवरं त्रातुं मुरारिवदरादगात् ॥ २०४

(II-152) दन्ताशन्यतिदारिताद्रिशिखरा दन्तावलास्सैन्धवाः
पारावारगिरीन्द्रमर्मभरभित्पादोत्थपांसु(त्र)जाः ।
चक्राघातविघूर्णिताचलचयाश्चामीक(रोद्य)द्रथा-
स्सत्वोद्घाटितपर्वताश्च सुभटास्साकं ययुःक्ष्माभृता ॥

---

1 कराभयभेरादायी

(II-152) बृंहितैर्हेषितैस्तेषां बृहन्नेमिरवैरपि ।
कोलाहलैर्विचाराढ्यं कुलाचलकुलं तदा ॥ २०६

(II-153) श्रितादृतस्सिद्धसुरादिवन्दित-
स्ततो मुदा तद्वनरोधिकम्पदः ।
नखेन चिक्षेप नगं स रामव-
दुरासदं दुन्दुभिकायमुन्नतम् ॥ २०७

(II-154) परं वसुपतौ तादृक्पादर्दीर्णाचले सति ।
प्रशुशोष क्षणादुर्व्यां परिकीर्णा सरिज्झरी ॥ २०८

(II-155) विदलितघनपक्षो वेदनामूर्छितस्स-
न्विशकलितलताद्र्वेगशीर्णोपलस्सन् ।
अहह भुवि पतन्नप्यद्रिरारात्स्रवन्त्या
वसुपतिघनपीतो वर्तते साधिलोलः ॥ २०९

(II-156) लीलाकन्दुकवत्क्षिप्तशैलापात(र)वैर्युताः ।
[1]घोषा मेरोः किमु स्वर्गयोषामुरजनिस्वनाः ॥ २१०

(II-157) हृदन्तरुल्ला(स)निदानभूभृ-
दुदन्तजाताद्भुतसिन्धुमग्नः ।
अनन्तराश्चर्यकथामपृच्छ-
दनन्तरायामथ तां सखीं सः ॥ २११

1 घोषामेरोपिस्वर्चयोषामुरवनिस्वनाः

कामाक्षि देवि करुणामयि कामकोटि
काञ्चीपुरीश्वरि कदम्बवनीनिवासे ।
कान्तैकचूतपतिना कलितावधाना
कर्णामृतं कलय काव्यमिदं मदीयम् ॥ २१२

इति श्रीकामाक्षीदासकालहस्तिकविकृतौ
वसुचरित्रे [1]चम्पूकाव्ये
द्वितीय आश्वासः

—: * :—

1 चम्बुकाव्ये ।

## कालहस्तिकविविरचितं

# वसुचरितम्

### तृतीयाश्वासः

कामाक्षि देवि करुणामयि कामकोटि
काञ्चीपुरीश्वरि कदम्बवनीनिवासे ।
कान्तैकचूतपतिना कलितावधाना
कर्णामृतं कलय काव्यमिदं मदीयम् ॥ १

( III-2 ) मञ्जुवाणी पुनर्मौनिकुञ्जरं दम्भपञ्जरम् ।
मञ्जुवाणीविलासेन [1]सञ्जगाद तदा मुदा ॥ २

( III-3 ) मन्दारसूनमधुवर्षमहानिधान-
बृन्दारकप्रबलदुन्दुभिघोषगर्जाः ।
भूलोकनायकवसोरथ भूरिजेतु-
रालोकनाय मघवागमनं शशंसुः ॥ ३

( II - 4 ) तदनु गोत्रवर्गसन्ततस्थितिकारी गुरुतरनयहारी विदितशतकोटि-हस्तो विभवप्रशस्तो नित्यकल्याणमयधाममान्यो निरन्तरधन्यो मथितरिपुबलसारो महनीयवीरो महिताम्लानमौलिसुमदामवान् महाभोगवान् सुधर्मावातिगरिमा सुकृतिमहिमा सकलभारवहनचतुर-कनीयान् सहजगरीयान् विहितविद्याधरानन्दो विख्यातकीर्तिबृन्दो

---

1 कंजगाद

दनुजमदमोचनो दशशतलोचनो दहनशमननिर्ऋतिवरुणपवनधनद-
गिरि(श)समन्वितो वसुवसुन्धराधुरन्धराय विशेषपारितोषिक-
वितरणाय निकामभूमा नितान्तधामा मनोज्ञसामा महेन्द्रनामा सरोज-
दामा समाजगाम । ४

(III-5) बृन्दारकवरो भूपं वन्दारुमथ मानयन् ।
मन्दारमधुजित्सान्द्रानन्दारवमभाषत ॥ ५

(III-6) भूमण्डलाखण्डल सूरिभूपा
दृष्टा विशिष्टाश्च न किं सदिष्टाः ।
ईदृग्जगद्रक्षणमीदृश[1]श्री-
रेवं बलं चैतदयो न चैषाम् ॥ ६

(III-7) पदनखमथिताद्रे पार्थिवेष्वेक्षि किञ्चि-
त्परम इव पृथुक्ष्मापालकस्तद्बलं ते ।
किमु पदनखतुल्यं किं बहूक्त्या [2]मदीयः
[3]पविरपि न पदाधःपाति किं लक्षणेन ॥ ७

(III-8) त्वन्नखे तरलगोत्रखण्डने
(विश्र)माय शतकोटिसाधनम् ।
सौमनस्यमधुना सुपर्वणां
भासते सति हिते भावादृशे ॥ ८

(III-9) सुमनोमनोरथविधायिशोभनं
सुमनोरथं सुहृदमुं दिशामि ते ।
महितं गृहाण सहितं मणीगणै-
रिति तं प्रदर्श्य हितमाह वासवः ॥ ९

1 श्रीदेवं बलं चैतदयोनशेषाम्

2 मदीयं 3 पविरपिनपक्षाधःपा...किं लक्षणेन

(III-10) सुधाब्धिकन्यादितिसूनुवैरि-
विवाहयानाऽहनि विश्वकर्मा ।
अमुं चकाराद्भुतमत्र शार्ङ्गी
लक्ष्म्या सहादित्य इवोल्ललास ॥ १०

तदनु ११

(III-11) उद्वाह्य साधु कमलामुरुकौतुकेन
विश्वम्भरस्सदसि विश्वसुरावृतस्सन् ।
दृष्ट्वार्ककोटिभविमानदृशो ममाशां
सर्वज्ञमू(र्ति)रदिशत्सगजाश्वमेनम् ॥ १२

(III-12) व्योमयानमिदं दिव्यधामयायि मणीमयम् ।
भूम राजन्प्रतिदिनं हेमराजिं प्रवर्षति ॥ १३

(III-13) भासुराकृते चित्रभानुभासमानमिदमखर्वलोकालोकसौख्यदायकं, धात्रीपते दिव्यधामोन्नतमिदमनन्तवाहिनीविभवभासकं, प्रथितप्रताप घनप्रकाशमिदमभ(ङ्ग)मणिचापशरपरम्पराधायकं, सुपर्वबन्धो [1]शरज्ज्योर्विराकृतीदं शार्वरगर्वनिर्वापकमिदमशेषदोषान्तकमिदं नितान्तकान्तकल्याणसदनमिदं कामरूपकमनीयमिदममृतान्नसारप्रदं मिहिरसुरधरमुदिरशशधरविराज(मानं तद)खिलगुणवर्णने वागीश्वरोऽपि नहीश्वरः । १४

किञ्च, १५

(III-14) पूरितामोददिव्योरुपुष्पकायुतमालिना ।
अनेनासदृशं पुण्यजनेनायुतपुष्पकम् ॥ १६

1. नवज्योति

(III-15) धार्मिकाग्रणीरिदमनन्तमणिधामतया हेमन्तसमये हितवितितिमातनोति, वागीशसदृशधीरिदमरुणप्रवालमञ्जुलतानितान्ततया वसन्तसमये सन्तोषसन्ततिं तन्तनीति; घनशौर्यसेनानीरिदममलमुक्तादीप्तिधाराधिवासतया घर्मसमये नर्म पूरयति; [1]प्रमदानवमनोभूरिदं प्रबलवज्रोपलप्रासादभासतया प्रावृषि प्रमदपूरं प्रकाशयति। १७

अपि च १८

(III-15) पार्वकालिकचन्द्रास्य सार्वकालिकसौख्यदे।
आर्यत्रिकमणीकान्तास्तौर्यत्रिकपरा इह॥ १९

(III-16) विमानमारोढुममुं विधिर्वा
रमापतिर्वालमुमापतिर्वा।
ममार्ह(ता त)त्कृपया महार्हं
तमादराच्चत्सदृशोऽदिशं ते॥ २०

(III-17) अर्कोपमैनमधिरुह्य गतागतानि
सन्मार्गतस्सदसि मे(ऽन्न मु)दाचरेति।
उक्तः प्रदत्तमुचितं महितं विमानं
जग्राह तं जनपतिर्जगदेकमोदम्॥ २१

(III-18) इति वासवे वसुमतीवल्लभाय विश्राणितनिरुपमान(वि)माने चिरतरं सुखीभवेति विरचिताशिषि सुधर्मामुपेयुषि सति तदनु वसुपतिरमितकुतुकभरतापसवरकलितलसदुपरिचर(व)सुनामधेयाङ्कितो भागधेयाञ्चितो जयकीर्तिलाभसौभाग्यवराराजन्यमान्यो निरतिशयानन्दपूरितो निजन(गर)मागतो निखिलजनजेगीयमानविमानमहिमा

---

1. प्रदानवमनोचूरिदंमबिल्वज्रोपलप्रासादभागतया प्रावृषि प्रमद...र प्रकाशयति।

ऽनुदिनजायमानजातरूपमणिकलापैरवनिदेवदेवतावर्यसपर्या(मार)-चयन्निष्टापूर्तानि निर्वर्तयन् कदाचिदारूढराजमानतद्विमानो गगन-चरकलितबहुमानो नन्दितात्मीयकीर्तिपरदिव्यगानो नाकलोकादि लोकं [1]नानानगवनानीकं नवद्वयद्वीपसारं नदन्नदीनदप्रचारं चालोकयन् भूलोकसुन्दरो विदितशुक्तिमतीनदीविहारदीर्घिका-विभ्रमो लीलाचलीकृतकोलाहलाचलो महाशरासो महाधिवासो दयाविलासो धिया (ल)लास । तापससुधाकर तदनन्तरकथां सावधानमवधारय । २२

(III-19) अखिलभुवनरोधकावनीभृ-
द्घनमदहारिसमागमेन शान्ते ।
सरभसन(ग)सम्भ्रमे [2]स्रवन्त्या-
स्समजनि तादृशगर्भसम्प्रकाशः ॥ *२३

(III-19) प्रवृत्तेऽद्रिभये राज्ञा निवृत्ते सति दौहृदम् ।
शुक्तिमत्याऽशुभाकृत्याऽशक्तिमत्याऽशनैरभात् ॥ *२४

तदानीं, २५

(III-20) मध्योऽदर्शि न रेजुरूर्मिवलयो मान्याब्जमुख्या विभा
मत्स्याक्ष्यास्समगम्यमुन्नततलं मौढ्यं नितान्तं गतौ ।
वृत्ता चारुरुचिः परा सलिलभृद्वेण्याऽशुचिर्गण्डभू-
स्तादृक्कङ्कणसंच्युतिर्मृदुतरस्तत्कम्बुकण्ठ्या रवः ॥ २६

किञ्च, २७

1. नानानगपरिनानीकं
2. स्रवन्त्याः *. * उभयोः श्लोकयोः प्रतिपाद्यं समानम् ।

(III-20) अलिनीला हंसगतेरब्जकोशकुचाग्रभूः ।
आवर्तनाभेश्शैवालश्यामरोमलता बभौ ॥ २८

तदनु क्रमेण, २९

(III-21, 22) अत्यन्तोढरसा पटुद्विजप(रीता)पन्नसत्वा नदी
कल्हारोत्करदीपके कमलिनीमाध्वीकतै(लाञ्चि)ते ।
रम्ये कुञ्जनिकेतने सुमरजोरक्षाकरे वैत(से)
सुश्लोकं सुषुवे सुतं वरसुतारत्नं च लग्ने शुभे ॥ ३०

(III-23) चञ्च(च्छिशू )दये पूर्णा चन्द्रताराप्रसन्नता ।
चन्द्रस्सौमुख्यभाक्ताराश्चार्वङ्घ्रिनखरायिताः ॥ ३१

तदानीं, ३२

(III-24) कोलाहलाद्रिः कुतुकी प्रियाया-
मपत्यभाग्येन मदन्ववायः ।
पूतोऽधुना पुण्यतमोऽस्मि चेति
वस्वङ्घ्रिवज्राधिलवं न मेने ॥ ३३

(III-25) वसुपदमथ वारयद्गिरि
जगति ररक्ष जवेन मामिति ।
वनजदृगतनोत्सुतस्य सा
वसुपदनाम वरद्विजाख्या ॥ ३४

(III-26) गिरिजा(या) ऐश्वर्यं गिरिजाया भवेदिति ।
गिरिकालविदस्तस्या गिरिकानाम चक्रिरे ॥ ३५

(III-27) कूलङ्कषाऽथ जलकात्कुमुदच्छदौघै-
राच्छाद्य चोत्पलदलाब्ज[1]मधूपयोज्य ।

---

1. मधुं नियोज्य

गाढं पुपोष (ग)मिताम्बुजलोलडोलौ
कन्यासुतौ मधुकरीरवकान्तगानैः ॥ ३६

(III-28) मरालवृन्दान्यथ मन्दयानं
मनोज्ञकीरा मधुसूक्तिधा(रा)म् ।
मधुव्रता मञ्जुल[1]गानमस्या
मयूरिका लास्यमशिक्षयंस्ताम् ॥ ३७

(III-28) सरित्कन्यामणेर्मौनिसाध्व्योऽनुग्रहसादराः ।
सदा धात्र्योऽपि सैरन्ध्र्यस्सख्योऽपि वनदेवताः ॥ ३८

(III-29) रत्नान्वेषणबाल्यकेलिरचनास्वज्ञातरत्नास्पदा
रत्नापूरिततन्नदीपुलिनतो रत्नं परं तादृशम् ।
सा सम्प्राप्य सखीर्विजित्य सहसा रेमे तदालीजनै-
र्मातृश्रीभरतो वयं हि विजिता इत्यालिवाक्यादृता ॥

(III-30) पाञ्चालि(कौ)कसि सुरागपरागक्लृप्ते
गुर्वग्रतः किसलभाजनगुम्भितानि ।
तत्केसरासवसुमानि तदाशयाऽऽसन्
सख्यावलेस्सपदि खाद्यघृताशनानि ॥ ४०

(III-31) कन्यागलेऽब्जजिति कम्बुमणीन्किमर्थं
धन्या युयोज दयितेति विहाय हारे ।
तातार्पिते तमपि कर्कशमेव मत्वा
मातार्पयत्तदनु हल्लकमञ्जुभूषाम् ॥ ४१

(III-32) पद्मोत्करैरथ निजैः परितोष्य सर्वै-
र्वर्णीवहार्यक(वि)भिर्वरहृद्यविद्याः ।

1. गानमस्यै

कन्यामणेः करतलामलकोपमेयाः
कल्लोलिनी करुणया कलयाञ्चकार ॥ ४२

(III-33) मान्यातितुङ्गमणिकूटसमर्पणेन
सन्तुष्टकिन्नरगणेन सदाश्रितेन ।
गीतप्रबन्धनिपुणां गिरिकां गिरीन्द्रो
वीणादिवादनविशेषपटुं वितेने ॥ ४३

(III-43) वीणाविनोदसमये विदितामितानु-
रागामृतं मुखरमामुकुरं सुतायाः ।
माणिक्यगेहमतनोन्मणिदीपमिन्द्र-
गाणिक्यचित्रमच(लो) गणनाधिकश्रीः ॥ ४४

संयमीश्वर श्रूयतामिदं सावधानम्, ४५

(III-35) सा शैलजेयमिह सा वनदेवतालि-
रेषाऽलिपा(लि)रिनपादहताचलोऽयम् ।
एतन्मणीगृहमिमानि सरांसि चैते
कु(ञ्जा)श्च कुञ्जरगतेः कुतुकैकवासाः ॥ ४६

(III-36) वसुविभुविजये बलारिनन्द्ये
[1]वरगिरिकाजनने च वर्ण्यमाने ।
मुहुरतिविनयेन मुख्यसख्या
मुनिरधिकं स ममज्ज मोदसिन्धौ ॥ ४७

(III-37) वसुपतिरिति शृण्वन्वल्लरीगूढदेह-
स्सुहृदतिनिपुणत्वं सूक्तिचातुर्यमाल्याः ।

1. वरगिरिराजनके

गुणमणिगणकन्यागोत्रभूतिं च मत्वा
करगतमिति मेने कन्यकारत्नमार्यम् ॥ ४८

(III-38) तादृङ्मुनिस्तदनु तत्र मुहूर्तमात्म-
ध्यानाधिरूढ इव साधु वसन्समोदम् ।
आहालिमान्तरदृशाऽहमपश्यमेना-
मङ्गीकरोति वसुभूपतिरञ्जसेति ॥ ४९

(III-39) लोकसृड्वसुना कान्तालोकरत्नमिदं सखि ।
न रञ्जयति चेत्तस्य चिरञ्जयति किं क्रमः ॥ ५०

(III-40) कन्यामणीषु गिरिका कमनीयरूपा
भूपावलीषु वसुभूपतिरेव रम्यः ।
योगो विधास्यति जवादुभयोः प्रसून-
सौरभ्ययोरिव सखीजनसौमनस्यम् ॥ ५१

(III-41) इतीरयन्तं मुनिवर्तंसं (मन्दयाना सन्दिहाना पप्रच्छ) ५२

(III-42) (कदाऽयास्यत्येनं वसुनृपमणिर्द्रष्टुमचलं
कदाऽगच्छेदेनां) [1]कनककलिकाकन्दलदरीम् ।
कदा द्रक्ष्यत्येनां तदनु स कदा वा परिणये-
त्कदा स्यादालीनां करतलगता कांक्षितरमा ॥ ५३

(III-43) वाचंयमेन्द्र वसुभूपतिरद्रिराज-
कन्यां वरिष्यति कदेति ममानुयोगः ।
भव्याशयो हि भवदीयशुभप्र(स)ङ्गा-
त्कन्यामणेः करगतैव करग्रहश्रीः ॥ ५४

1. करककलिका

इति मधुरविनयवाणीं मञ्जुवाणीं ५५

(III-44) [1]वसुपतिरिदमालिं ते वरिष्यत्यवश्यं
तव यदि विचिकित्सा तर्हि मन्त्रप्रभावात् ।
[2]इहगमितमिदानीं द्रक्ष्यसीत्येतदुक्त्वा
कपटजपविधानं कल्पयामास मौनिः ॥ ५६

(III-45) विभुरथ विशदं तां वीक्षितुं सङ्गतोऽसौ
समय इति लतौघात्साधु निर्गत्य मेघात् ।
विधुरिव धुरि तस्थौ विस्फुरद्गात्रगन्ध-
भ्रमदलिरुतवन्दिभ्राजदुद्घोषपोषः ॥ ५७

तदनु, ५८

(III-46) कन्दर्पेन्दुनलोपमं करजिताम्भोजं प्रवालाधरं
कञ्जास्यं ललितस्मितं मणिरदं लीलाकटाक्षोज्ज्वलम् ।
कल्याणाम्बरभासुरं कनकसच्छायाङ्गकान्ति मही-
कान्तं वीक्ष्य ससम्भ्रमं सविनयं कान्ता जवादुत्थिताः ॥

(III-46) किरीटहारकटककेयूरमणिकुण्डली ।
राजा युवा स राराजद्राजास्याभिमुखं गतः ॥ ६०

ततः परम् ६१

(III-47) स काम्यकल्याणसमृद्धि(रस्तु)
सुमास्त्ररूपेति सुहृत्कृताशीः ।
दरस्मितो यौवतदत्तपीठे
हैमेऽम्बुजे (हं)स इवोल्ललास ॥ ६२

1. वसुपति....रमालिं 2. इह गमितमिदानीमीक्षयेत्येतदुक्त्वा

(III-48) पद्मिन्याः प्रथमं तदा वसुपतिं प्राप्तप्रभावैभवं
पश्यन्त्यास्सरसान्तरङ्गमभवत्प्रत्यग्रगोज्ज्वलम् ।
प्रायेणोत्कलिका विकासमतुलं प्राप स्फुरद्वासनं
पर्याप्ता हि शनैश्शनैरथ चिरं प्राञ्चत्कटाक्षालयः ॥६३

(III-49,50) तादृक्पक्ष्मचलाः पुरा (न)नु ततस्ताटङ्कशोभाश्रिता-
श्चञ्चद्राजनि लम्बिनोऽथ चतुरं चन्द्रे चकोरा इव ।
(लज्जा)रागभराद्गतागतरतास्तद्दृष्टिपाताश्चिरं
चित्राश्शाततराश्शरा इव वराश्चेतोभवस्याऽबभुः॥६४

(III-51) मीनेक्षणादृगभियात्य(नि)मेषवृत्त्या
तत्कान्तिवारिणि तदीक्षणजालकेन ।
मन्दाक्षवा(रि)निधिमग्नतराप्ययोजि
धीरेण मोहनगुणातनुधीवरेण ॥ ६५

(III-52) कामोपाध्यायकलितं नेत्राञ्चलनियोजनम् ।
कौतुकान्वितयोर्जातं भाविभावुकसूचकम् ॥ ६६

(III-53) अथ तदानीमेव निजसनयनमधुरधनुषा निरुपमरुचिविशेषं, विलसितगुणेन विभ्रमातिशयं, राजीवबाणेन रसोदग्रतां, कङ्केलिसूनेन कमनीयरागं, माकन्दकुसुमेन महनीय[1]करग्रहाशां, उल्लसितजाति-[2]सुमनसोष्माभिवृद्धिं, नीलोत्पलेन निरतिशयक्षणदाभिवृद्धिं, किसलयधारया केवलमपलाशाकुलतामपि समाकलयन्नसमशरवीराग्रणीरखिलसाधनैर्विरचितविवरं विचित्रकौशलेन युगपदविशददयमुभयहृदयम् । ६७

तदानीं, ६८

1. काग्रहाशां 2. सुमनोष्मभिवृद्धिं

(III-54) एणीदृगाशयं ज्ञात्वा क्षोणीशहृदयं च सा ।
पाणीहिताञ्जलिर्मञ्जुवाणी सरसमाह तम् ॥ ६९

(III-55) त्वद्राकागतिरा(तनो)त्कुवलयाधीशाद्य नः [1]पर्वता-
मालोकस्तव लोकबान्ध वजवाद्व्याहरन्नस्तमः ।
पादाप्तिर्वसुभूभृदद्य भवतो नस्सौमनस्यं ददौ
राजत्सन्निधिरीप्सितार्थमदिशत्ते राजराजाद्य नः ॥ ७०

किञ्च, ७१

(III-55) सद्यस्सुरभिचारित्र सफला भवतो बभौ ।
असत्कान्तारागलक्ष्मीरालिभाग्यमतो महत् ॥ ७२

सज्जना(वन)गुणमणिराजमान ७३

(III-56) अन्या न ते हि वयमार्य महावनेन
धन्या नितान्तमनिशं धरणीधरस्य ।
कन्यामिमां भवदनेककथारसेन
जन्यादशामकलयाम जगन्मनोज्ञाम् ॥ ७४

(III-57) [2]या लालयत्यतिघनैर्मणिभिर्नदी त्वां
शूलायुधस्य हिमशैल इवाचलो यः ।
लीलाचलस्तव तथाविधशुक्तिमत्याः
कोलाहलाचलमणेश्च कुमारिकेयम् ॥ ७५

(III-58) नाधत्ते हरिचन्दनान्यसुमनस्स्वेषारुणाङ्घ्रिः पदं
प्राञ्चद्बाहुरसौ लतां स्पृशति न श्रीपारिजातापराम् ।
शेते सौरभगात्र्यसौ न शयने मन्दारसूनान्यतः
कान्तेयं मधुराधरा न मनुते कल्पद्रुमान्यात्फलम् ॥ ७६

---

1. पर्वमा. 2.

(III-58) कुलगिरिसुतकुमारिकाया एतस्याः कुलक्रमागता शीतलाशयता, स्रवन्तीसम्भवाया एतस्या जननैकरूढस्सरसगम्भीरभावः, सारससोदर्या एतस्यास्सहजसिद्धं शरीरसौरभ्यम् । ७७

किञ्च, ७८

(III-59) पदारम्भे हंसप्रकृतिरधरस्पन्दकलने
स्फुरेद्रागस्तोमः श्रुतिविवरणे श्रीविलसनम् ।
कटाक्षे षट्पद्यः करविवलने पल्लवरमा
कथं (वर्ण्या) धन्या तदिह गिरिकन्या [1]भरतगैः ॥७९

(III-60) श्रीनिधे सिन्धुजाऽद्यासौ श्रीनुता भवदादृता ।
महामुनेरस्य कृपाऽमन्दरागविशेषतः ॥ ८०

(III-61) इत्युक्तो वसुभूपतिर्हितमतिर्हि मञ्जुवाणीदृशो
विज्ञाता(तनु)मन्त्रतन्त्रविभवो वर्ण्यः कथं वा महान् ।
अस्मादेव भवत्सखीवरमणेरालोकभाग्यानि मे
प्रायोसौ न मुनीन्द्र एव [2]परमाप्तश्चेति तामाऽह सः ॥

(III-62) तदनु महानुभावमहनीयमन्त्रमहिमातिशयेन भवादृशभामिनीभव्यतरभाषिताकर्णनभाग्यजातानि जातानीति वसुपतिना बहूक्तो नीरजदलाक्षि निरतिशयभुवननिर्माणचातुरीधुरीणो नीरजातासन एतादृशयोग्यवस्तुयोजनादवदातामितयशःपरम्परामनाकलयन् परीवादपारावारे किमु निमज्जति, वसुराजदर्शनमेव तन्निदर्शनमतो न विचिकित्सेति सखीं समाश्वासयन् गिरिकावसुराजयोरमूल्यकल्याणकौतुकसाकल्याय कलितानुग्रहो विरचिततदीयविविधविनयसंविधानैरामोद(मे)दुरो मायातपस्वी [3]तदामन्त्रितो मणिमन्दिरान्निर्गतो निकटतटसुर-

1. क...तनैः 2, "सुतरामत्याप्त इत्याह सः" इतिपाठान्तरम् ।
3. तन्निमन्त्रितो

विटपिपटलगुञ्जदलिपुञ्जमञ्जुकुञ्जे विसृष्टमुनिवराकारो महाधीरो यथा-पूर्ववेषो महाभिलाषो राजान्वेषीव शनैश्शनैः पुनरपि तत्तरुणीभवन-मागतो भूलोकवास(वं) तमुल्लोकयन् प्रकटिताश्चर्यवर्यो वसुराजस-विधे स ललास सविलासम् । ८२

(III-63-64) कान्तास्तं [1]नृपमन्त्रिणं मुखतनूकान्त्यादिभिः प्राङ्मुनिं
निश्चित्याथ महात्रपाभयमुदो नैपुण्यसंविस्मिताः ।
गोत्राधीशसुतावलोकनमुदे गोत्रापतिप्रेषितं
मन्दं पूर्वमुपागतं मणिगृहं मायामुनिं मेनिरे ॥ ८३

तदानीं, ८४

(III-65) कान्तागतेर्नृपमणेर्गिरिकाननं न-
स्सारश्रियं वहति सम्प्रति पश्यतेति ।
सख्या गिरा सरसया समरागलज्जा
कन्या तमैक्षत नता कमनीयहारे ॥ ८५

(III-66) नगजाकु(च)हारनायकश्री-
र्नलिनाक्ष्याः किमलक्षि नव्यभाव्या ।
इति नर्मसखीरणेन बाला
[2]सहसैवाऽस ससाध्वसानुरागा ॥ ८६

(III-67) तदनु सौदामिनीलतातन्वी तरलतरकटाक्षवीक्षारुचा तादृशकल-कण्ठध्वनीकं तर्जयन्ती प्रमदभरशिखावलताण्डवं प्रकटयन्ती चारुतर-हंसकोत्करं चालयन्ती पयोधरौन्नत्यभङ्गुरमध्यगगनाञ्चलं प्रकटयन्ती निकाममणिप्रतिहारां जगाम घनप्रतिसीराम् ८७

1. नृपमन्त्रिवाङ्मुखतनूकान्त्यादिभिः प्राङ्मुनिं
2. सहहससाध्वसाङ्गरागा.

(III-68) कान्तामणिं यवनिकाप्रान्तालसगतां तदा ।
आलोकयन्महारागाद्भू(धरारा)तिराह ताः ॥ ८८

(III-69) धम्मिल्लोज्ज्वलनीलिमैव तनुते धाराधरालिप्रभां
नेत्रश्रीर्नितरां करोति नियतां नीलोत्पलालीविभाम् ।
कन्याया स्मितकान्तिरेव कुरुते कामं सुधाब्धिद्युतिं
गात्रश्रीर्गणनाधिकां कलयते गाङ्गेयवल्लीरुचिम् ॥ ८९

(III-69) प्राणसख्यस्तथाप्येषा प्रणयप्रतिघान्विता ।
प्रतिसीरां स्वकान्त्यन्यां प्रतिपेदे कुतोऽधुना ॥ ९०

(III-70) इतिवादिना युवतिवारिजेषुणा
धनिकाधृतां यवनिकापटीं श्रिता ।
[1]हरिणीदृगैक्षि धरणीवलारिणा
परिणीतिचेलसरणीमि(तेव) सा ॥ ९१

तदनु, ९२

(III-71) काकुघोषकठिनालिभीतये
पक्षगौरवपरा प्रसूसखी ।
कन्ययाथ कलहंसिका स्मृता
मन्दमैक्षि वनजातमध्यतः ॥ ९३

(III-72) आगत्य सैवमवदद्गिरि(का)कुमारि
कल्याणसङ्कटककल्पकसूनदाम ।
दत्तं समन्त्रमृषिभिस्तव दातुमेव
माताऽद्य काङ्क्षति मया सह शीघ्रमेहि ॥ ९४

(III-72) तदनु सदनमिदानीमायामीति सादरं जन(नी)सखीं समालिङ्ग्य,९५

1. हरिणीदृतेक्षि

(III-73) कुचभारवलन्मध्या कचभारगलत्सुमा ।
नूपुरारावमधुरा सा पुराऽलिमणेरयात् ॥ ९६

तदैव, ९७

(III-74) आलम्ब्य तत्करमयेऽनुमतिं विहाय
गन्तुं किमर्हमिति तद्गमनं निवार्य ।
अस्यां दयां कुरु नृपेत्यभिधाय सख्यो
याता नृपाभ्यनुमता मुदिताद्रिजाताः ॥ ९८

(III-75) पञ्चाननाऽनुगतपार्थिववर्यवीक्षां
वेश्माग्रभूमिवनवेल्लितवल्ल्यनीकम् ।
तत्केशपाशघनताण्डवबर्हिबर्ह-
वाताभिघातवलितं न तदा रुरोध ॥ ९९

(III-76) वनघनतरुवल्लीवर्ण्यसूनानि हित्वा
विलसितगिरिजातावेणिगन्धाय भृङ्गाः ।
अनु(ययु)रधिरावा भाविविश्लेषखेदा-
(द)नुगतविभुवीक्षाहारिवारा इवारात् ॥ १००

(III-77) आलिहस्तावलम्बाटत्कन्यादर्शिवसुप्रभोः ।
अत्यन्तालोकभूमानमश्रुधारा रुरोध सा ॥ १०१

(III-78) [1]सख्याह्वानमिषा(च्च)नूपुररवैस्सान्द्रे मरालीकुले
सारास्वादलताफलानुसरणव्याजेन कीरावलेः ।
सारङ्गातिभयच्छलेन च चिरं साचीकृतास्याम्बुजा
सा कान्ताऽथ विलम्ब्य वर्त्मनि विभुं संवीक्ष्य दाक्ष्या-
[दयात् ॥ १०२

1. सख्याह्वानमन

(III-79) धरणीपतिस्स तरुणीमतिस्मर-
न्स्मरवेदनाश्रुभरवेगपूर्णदृक् ।
तरलो रसालसरलोरुतद्वने
हरिणीदृगात्तसरणीमथाऽगमत् ॥ १०३

(III-80) पादन्यासः किमिह नु ततः पल्लवश्रीसमृद्धि-
र्वीक्षालीला किमिह नु ततो भृङ्गपालीविभाली ।
मन्द्रालापः किमिह नु ततो माक्षिकस्फारधारा
तस्याः किं वा स्मितमिह ततस्सूनशोभाऽभिभाति ॥

(III-80) इति सखायमीरयन्नशोकतिलककर्णिकारनमेरुलतावितानानितान्त-सङ्क्रान्तवनी(सर)णिषु तन्वीमन्वेषयन् तामनालोकयन् चिन्ता-सन्तापसन्तानितो बभूव मथितप्रतीपो महितप्रतापो महनीयचापो महिमाधिरोपो मधुहारिरूपो मणिवंशदीपो महि चेदिभूपः । १०५

(III-81) कलिकाप्रवालकदलीन्दुवेदिका-
सुमगुच्छवल्लिनलिनालिशोभने ।
स्मरसारकारिणि वने चरद्विभो-
रबलाकृतिस्फुरणमास सर्वतः ॥ १०६

(III-82) दृष्टा लतातन्वीति दूरतो याति, ललना न चेदभिनवतरलतावाप्तिं नाटयति; वीक्षिता पद्मिनीति विस्मितो वलति, तरुणी न चेत्ताम-रसमनुपश्यति; विलोकिता किसलविलसितपञ्चशाखेति [1]वेगे-नाटति, शातोदरी न चेद्यति शाखोपशाखानुषक्तिं; संलक्षिता नवीनरम्भेति सकुतुकं धावति, कान्ता न चेत्कदलीसमीपे भ्रमति ; एवमवनीपतिरतनुनिशितशरपरम्पराशरव्यभूताशयो मोह-

---

1, वेगन नटति

भरितोऽपि निजविभ्रमभरं नैपुण्येन निजसुहृदोऽपि धीदयावास-
श्छादयामास । १०७

(III-83) तुलनातिशायिललना(स्पृहो व)नी-
स्सरसीरवेक्ष्य सरसी ततस्ततः ।
भ्रमरारवाधिसुमरा(श)यो मणी-
सदनाश्रितस्स मदनार्दितः पुनः ॥ १०८

(III-84) तदनु मेदिनीपतिरपास्तधैर्यो निजसुहृदमाजगाद । १०९

(III-84) (अस्मद्वधूद)ब्जमिव मन्दिररत्नमद्य
(त)द्रूपचित्रित(त)रं गतिशून्यमेतत् ।
तन्मञ्जुगानरसगुम्भि तदङ्गरागा-
मोदं किमैक्षि ननु [1]मुग्धदृशाऽनुपेतम् ॥ ११०

(III-85) हंसौघश्शुचिवर्तनात्कियदहो वा तीर्थसंवास्यभूत्
कीदृक्षं सुरसालतो वरफलं [2]कीराल्ययाद्धष्टियत् ।
कीदृक्पूर्णमहासवन्नु सुमनोरागादगुष्षट्पदाः
[3]याता उष्णपदक्षयान्नु शिखिनः कीदृक्तपोवर्जनम् ॥

(III-85) कन्यानुसरणकौतुकं कान्ताऽधरास्वादभावुकं कमनीयमुखकमल-
सौरभाघ्राणसौभाग्यं कामिनीकरकङ्कणनि(न)दगर्जनश्रवणभाग्य-
मत्रत्यहंसशुकमधुपमयूरवाराः क्रमादन्वभूवन्निति सुमचापप्रतापव-
(न)तापमहाटोपनिश्वासमाप स भूपः । ११२

(III-86) वीणादिवादनतलं विविधालिहास्या-
देणाक्ष्यधिश्रिततिरस्करिणीतलं च ।

---

1. मुग्धदृशोरुपेतम् । 2. कीरावल्याद्धारियत् ।
3. याता विष्णुपदाश्रयान्नु शिखिनो यादृक्तपर्जनम्

प्राणालिवारिततलं च स वीक्ष्य पञ्च-
[1]बाणाकृतिर्बहुलरा(ग)तमश्चलोऽभूत् ॥ ११३

(III-87) तदनु मदनदूनं तं जगादैवमाप्तो
नरवर किमपारो नर्मचोरो विचारः ।
युवतिरतिपतिं त्वां युक्तमालोकयन्त्या
धरवरदुहितुः प्राग्धैर्यहार्येव कामः ॥ ११४

(III-88) तस्याः पिता तव पदानत एव माता
त्वच्छौर्यवीर्यरसपोषितजीवना हि ।
सख्यो भवन्नुतिपरा ननु सा च लीला-
सम्मोहिता परिणये तव संशयः कः ॥ ११५

(III-89) कन्याविवाहनिर्णीत्यै धन्याऽयाहीति तद्गिरा ।
अन्यादृश्व्याजधैर्यं वन्याभुवि तदाऽप सः ॥ ११६

(III-90) शैलाद्वेगमवरुह्य ततोऽधिरुह्य
नीलाचलाकृतिगजं स निषादिनीतम् ।
लीलाश्रमाम्बुहरतच्छुतिवातपोतो
बालाकुचोरुसमकुम्भकरौ ममर्श ॥ ११७

(III-91) अतनुनवपताकालोकमागात्पुरीं स्वां
करिवरगतिरम्यं कान्तकाश्मीरपत्नम् ।
तदिदधिकविभासिद्योतितद्वाहिनीभू-
विभवमथ स [2]पश्यन् विस्मितोऽन्तर्बहिश्च ॥ ११८

1. बाणाकृतिर्दवाल्लरातमश्चलोभूत्.

2 वीक्षन्

(III-92) करीन्द्रादवरुह्याऽथ गिरीन्द्रारिस्स चोदयन् ।
नरेन्द्रालिमगाद्वेश्म सुरेन्द्रालयशोभनम् ॥ ११९

(III-93) तारानाथमुखीविवर्तितमणीनीराजनाभाजना-
ऽऽकारातिभ्रमदाशयोऽथ तरुणीवारातिपारादरात् ।
[1]नीरामर्शनभोजनाद्यभिनयन् दारादिकानास्थया
राराजत्सुमनोनवीनशयनं मारातुरः प्राप सः ॥ १२०

(III-94) नैकीभूता वपुषि नगजा यद्यजय्यो मनोभूः
कन्या सिन्धोरुरसि न हि चेन्नाक्षिसंज्ञा विधौ स्यात् ।
सद्धीर्णौ चेदभिमुखमिताऽधःक्रियार्हा न हंसाः
पद्मिन्या चेन्न करघटना रात्रिबाधा न वार्या ॥ १२१

(III-94) इति स्मरन्स साम्यङ्गस्सात्त्विकोदयजृम्भितः ।
स्मरास्त्रमग्न[2]स्सन्तापी बभूव बहुधा ततः ॥ १२२

(III-95) नव्याशया ध्यातनदीसुताङ्गी
मुक्तां नखाग्रैर्मुखरागतोऽब्जम् ।
शुभावहं शुक्तिम(तीज)मीष-
ज्जग्राह नाऽन्यज्जगतीष्टमेषः ॥ १२३

(III-96) सुदृक्तनूकान्तिसुधावगाहा-
दस्वप्नवृत्तिन्यधिपाक्षियुग्मे ।
मिलन्मनस्तत्कुचमेरुवास-
मपैक्षताञ्चत्सुरतानुभूतिम् ॥ १२४

(III-97) तदनु मदनो जगदेकवीरस्य जगदाश्चर्यवर्यकाण्डप्रकाण्डलाघव-
प्रकटनेन श्रमं न किं सम्पादयामास, सुमसाधनो घनसुमनो-

1 वीरामर्शनभोजनादि नटयन् 2 स्सन्तापो

धर्मभरणेन सर्वंसहापतेस्सात्विकगुणसारसामग्रीं न किं संवर्धयामास, नालीकसायको नवमोहनाङ्गस्य नवरसभाववैभवप्रदर्शनेन नव्यसाहित्यचिन्तां न किं कल्पयामास, तस्य मेदिनीसार्वभौमस्य सहृदयस्सन्नसमेषुरमेयशक्त्या महासक्त्या किं किं न कलयामास, सोऽपि भूपतिरितरप्रसङ्गसम्भावनाविरहेण तदेकपरवशोऽभवदिति किमत्र चित्रम् । १२५

(III-98) **सुमनोमार्गणवशस्सोऽभवत्तद्गतक्षमः ।**
**ततो बभौ धवलिमा तदङ्गे मूर्तकीर्तिवत् ॥ १२६**

(III-99) पदनखरनिक्षिप्तपरमोच्छ्रायपर्वतस्य पराक्रमशालिनः पद्मनयनापयोधरशिखरिगरिमा सम्प्रति कियानजनि भारः, गगनघण्टापथक्रमणशीलस्य वनतरबलस्य गजराजगमनाविलग्नगगनमधुना कियदास गगनं, कल्लोलिनीरयनिवारकस्य क(न)दनुभावस्य कामिनीनयनांशुकल्लोलिनी कियन्तं भ्रममद्य कलयामास, प्रतिदिनव्ययितसुवर्णराशेर्दातृशिरोमणेरिदानीं प्रमदाविभासुवर्णं कियन्तमाशाभरं पूरयामास, हा हा बतेति विस्मेरहृदयो वियोगिजयो विशेषद्‌यो महानुशयो रतिराजो वसुराजस्य महान्तरङ्गो मधुपनिषङ्गो महोभरधन्यां महीधरकन्यां तदधीनचित्तां तदायत्तवृत्तामाततान धूतमानः १२७

(III-100) **अङ्गुल्यग्रतलेन [1]पूर्वमवनावालेखयन्निश्चलं**
**[2]पाण्यञ्जे वरवर्णपूर्णफलकासङ्गं ततः प्रापयन् ।**
**तस्यास्साधु तदर्थचिन्तनपराण्येव श्रुतान्ये(ध)यन्**
**शास्त्राभ्यासमुपर्युपर्यकलयत्सान्द्रानुरागो गुरुः ॥ १२८**

1 पूर्ववावेनावालेखयन् निश्चलं
2 पाण्यज्जि

(III-101) चेतोजातनिशातचूतविशिखाघाताभितापार्चिषा
ताम्यत्सिन्धुजया समोदरधिया तत्सिन्धुपद्मावली ।
प्रक्षिप्ता कुचपद्मकोश(सविधे) प्रागेव सातीतपत्
ज्ञातिश्चेदिति नीतिशास्त्रवचनं सत्यं हि भूमण्डले ॥

(III-102) वल्गद्दतीन्मधुरवाग्विभवान्क्रमेण
मात्राशयान्पितृभृतांश्च महाद्विजेन्द्रान् ।
आशैशवं परिचितानपि तानपश्य-
दन्यानिवाचलसुता वसुबद्धभावा ॥ १३०

(III-103) कुचजितमहाशैला कोलाहलाद्रिकुमारिका
मलयमरुताऽलोला तूलावलीव बभूव सा ।
(न कि)मु लघु(तां) [1]यायादार्यासतो वसुयाचना-
न्महितगुरुताधन्या कन्याऽचलाधिपतेरपि ॥ १३१

अस्यैव श्लोकार्थस्य वृत्तान्तरेण कथनम्—

(III-103) कोलाहलाहार्यकुमारिकाऽसी-
तूलावलीवानिलबाललोला ।
प्रायो वसुप्रार्थनया लघुत्वं
न्यायोदितं किं न सगौरवाणाम् ॥ १३२

(III-104) शुक्त्याभगोलकतलस्रुतबाष्पधारा
बालापयोधरतटे गलिता बभासे ।
विज्ञाततद्दुहितृभावविवक्षयेव
कोलाहलाख्यकुलशैलगता नदीव ॥ १३३

यायादायासतो

(III-105) आश्लिष्य गाढमभिलाषविदात्मजातां
तत्तापवह्निशिखया तटिनी शुशोष ।
नो चेत्सुतावपुषि नूत्नबिसाम्बुजानि
कर्पूरसारसिकताश्च कथं स्फुरेयुः ॥ १३४

(III-106) अभ्रङ्कावनमात्तमर्दनमटद्धातुस्फुटोद्यद्रसं
पुष्पास्त्रोज्ज्वल[1]योगिना वसुमये पूर्णं निशान्ते कृते ।
नारी विस्मृतविग्रहा न मनुते भूषा गलन्तीरहो
किञ्चिन्न प्रतिभाषते प्रियसखीः किञ्चिन्न वा वीक्षते ॥

(III-107) पाथोधिपातिगिरिपक्षभिदा(वि)मुग्धं
शस्त्रं शतारमवमत्य सहस्रधारम् ।
स्मारं वधूकुचगिरी निरमज्जयत्तौ
बाष्पोदधौ महति बन्धुरपत्रभङ्गम् ॥ १३६

(III-108) कान्ताक्षिखञ्जनयुगं कमनीयलीलं
वीक्ष्याधिकं हृदयसीम्नि विलम्बमानम् ।
सम्यग्विचिन्त्य [2]वसुसङ्गतिमन्तरङ्गे
विव्याध शम्बरहरो वि(शि)खैरमोघैः ॥ १३७

(III-109) तदा शरत्कोटितते दिने दिने
(ज)गाल वेणी तटिनीमणीभुवः ।
कथं नु वक्ष्यामि तदीयतानवं
यदूर्मिकाः कङ्कणतां यतो ययुः ॥ १३८

(III-110) चित्तानङ्गनियोजितास्त्रमरुतश्चिन्ताश्वसन्मारुता-
स्तद्धीतस्तनमेरुवेल्लितफणी तादृङ्मृणालोत्करः ।

1 योगिता 2 वसुससन्तिन्तदं सर्वव्याध.

तापाग्नेः स्तनमेरुतो द्रुतजलं तस्याः परागान्विताः
स्वेदास्तन्नवफेनतां मणिगणाश्शीर्णाम्बुरूपा ययुः ॥

(III-110) मुक्ताताराप्रसारेण मोहान्धतमसेन च ।
तद्दृगब्जेऽर्धमुकुले तमीदिवससंशयात् ॥ १४०

(III-111) तदनु शम्बरविरोधी (वरगु)णजालसंवननसामग्र्या महाशापाशसंयमं समारचयन्, विततताराग्निकीलान्विस्तारयन्, जीवनक्षोभमनल्पमाकल्पयन्, वनचरालिघोषं पोषयन्, कातरनेत्रशम्बरप्रसारमापूरयन्, शरभगण्डकविशेषं संशोषयन्, चित्रकायलीलामालोलयन्, भद्रगतिचारं निवारयन्, आततस्तब्धरोमवारमासारयन्, घनसितापाङ्गचालमाकलयन्, काण्डवर्षेण गिरिभुवश्शुभंयौवनदेशे सञ्चरन्मृगयाविहारमाचचार । १४१

(III-112) वल्गन्मृणालफणिनां शुकवाजिधाटे-
गन्धानिलस्य गरभूघुटिकालिपालेः ।
आलीततेः पिककुलस्य च हा तदानीं
बाला नितान्तवशतां बहुधाऽय चिन्ताम् ॥ १४२

(III-113) हा किञ्चिदप्यजनि नात्मनि तातधैर्यं
तादृङ्निदाघघनतापकृशाऽगभीरा ।
जाताऽस्मि हन्त जननीव जडोद्भवाऽहं
तातानुरूपतनया धरणौ हि धन्याः ॥ १४३

(III-114) सद्वृत्तगौरसहजातमणीकदम्बं
प्राप्तव्रतं भयदपल्लवसूचिवासात् ।
तद्धारनाम सदगात्तदुरस्तथापि
प्राप्तं मया न (ब)त भाग्यवशा हि लक्ष्मीः ॥ १४४

(III-115) जातेप्सितासु जननीजनकाहृतासु
धन्यासु देवनरभोगधराङ्गनासु ।
नैकाऽभवं तटविदारिपयोलहर्या
दूरार्द्रभावदृषदोऽप्युदितैवमस्मि ॥ १४५

(III-116) मन्दं तन्व्यभिवादमोदसमये मायाजटी तद्वनी-
मायातस्स किमर्थमङ्गज(समं) सस्मार कस्माद्वसुम् ।
मिथ्यामन्त्रबलेन मोहनगुणो मेऽदर्शयत्तं कुतो
(मायामौनिवरप्रदर्शितवसुभ्रान्तिं कुतो) वाऽगमम् ॥

(III-116) कदा घटेत जननीकौटिल्यवैकल्यं, कदा वा द्रवेदतिकठिनजनक हृदयं सदयं, कथं वा तरेयमहमपारं विरहपारावारं, कथं वा कुत्र वा मम समुल्लासस्समुल्लसेत, क्रीडागहनगमने वा पीडाशमो लगेदिति डोलामहालोलाऽशया बलाऽऽस सा लीलावनालोका-कुला शोकाविला । १४७

(III-117) आलीजनैरविज्ञाता केलीवनमथैत्य सा ।
नालीकबाणकल्लाणपालीधाटया सविह्वला ॥ १४८

अनन्तरं, १४९

(III-118) लेप्तुं कैरवरेणुभिस्तनुलतां [1]रीणाश्रु पद्मासवै-
र्मार्ष्टुं मञ्जुरसालपल्लवरुचिं द्रष्टुं मरुद्बालके ।
मन्दं निश्वसितुं मधुव्रतरुतं श्रोतुं च सैच्छत्प्रिया
व्यायोक्तीव मनोजभूतविलुठद्भूतानि तत्तत्स्थले ॥

(III-119) कान्ता सैवं लतागेहे क्रान्ता वपुरनास्थया ।
मारकं सहकारस्य कोरकं घ्रातुमुद्यता ॥ १५१

1 लीढाश्रु.

(III-120) तदा मणीसद्मनि तामदृष्ट्वा
तदालिपाली परितापतप्ता ।
अन्विष्य सोद्वेगमनङ्गदूना-
मालोक्य कुञ्जान्तरगामवादीत् ॥ १५२

(III-121) हा हन्त मामकवियोगकथाऽसहा त्व-
मेकाकिनी कथमिहालि वृतागताऽसि ।
अत्रातरः कथममन्दमरन्दसिन्धूः
पद्मापरागसहमास कथं पदाब्जम् ॥ १५३

(III-122) अत्रागता ननु हिताऽहितकार्य[1]मौग्ध्या-
त्पद्माक्षि हन्त किमु पान्थगतिं सहन्ते ।
मत्तान्यपुष्टमधुपोत्करपल्लवश्री-
पर्याप्तगन्धभरपांसुल[2]पङ्कजाल्यः ॥ १५४

किञ्च, १५५

(III-123) कीरावलेः फलविभङ्गकृतोऽधिनासं
कूलङ्कषो वसति कोपरसो हि साङ्गः ।
कालातिभेदिघनकालतनोः पिकाले-
र्नेत्राञ्चलादूद्रवति नीरजपाटलार्चिः ॥ १५६

(III-123) मुग्धे गले बिसविषो मुखरागता स-
दम्भस्थितेर्वसति दर्पभृतो मराल्याः ।
[3]चोष्यासवर्द्धिसुमनोमृदुपञ्चशाखा-
रक्तादरालिसदसां मलिनः किलात्मा ॥ १५७

(III-123) बिम्बोष्ठि पल्लवकरा बिसबाहा (सु)माकृतिः ।
अत्रागतासि यत्तसादद्रिजे कठिनाशया ॥ १५८

1. मुग्ध्यात् 2. पङ्कजास्य 3. शोष्यासवर्द्धि

(III-124) मारो मानिनि विप्रयोगि(म)थनक्रूरोऽतिघोरो महा-
सारासो गुरुशालवस्य कनकस्तेयास्सगन्धानिलाः ।
तद्भृत्या मधुपाश्च तारपरभृन्नादस्स तन्मित्रता-
मागात्पञ्चमरूढि(ढ्य) सुदृशामत्रागतिः किं क्षमा ॥

(III.125) इत्यालिमण्डलमुदीर्य सनिन्दमस्या-
श्शुभ्राब्जपात्रमभिवेष्टय सुमान्नपूर्णम् ।
कल्हारदीपमतिगन्धपलाशिवाट्या-
मत्यन्ततृप्तिमशरीरिबलस्य चक्रे ॥ १६०

(III-126) मञ्जुवाणी तदाऽगत्य मञ्जुवाणीमुवाच ताम् ।
अञ्जसाऽनिलबालालिपुञ्जसारसविह्वलाम् ॥ १६१

(III-127) भृङ्गीशुकैर्भीततरा किमर्थं
न वीक्ष(से) (ह)न्त न भाषसे वा ।
कटाक्षधाराकलवाक्सुधाभि-
र्जिताः कुजव्रातमितास्तवैते ॥ १६२

(III-128) नीरजनयने निखिलागमान्तवासनया निर्मुक्तकाञ्चनमिदं माधुकर-
कुलं, वारिदचिकुरे वर्णिभावेन दृढावाप्तसंयमा वनमालिनाम-
वादिनी शुकसन्ततिरियं, जलजारिवदने जनकपोषकजनानुरागरहि-
तमाधवार्पितमहितसूक्तिनयो वनप्रियचयोऽयं, पल्लवकोमले पद्मास-
नाभ्यासपारवश्येन परब्रह्माधीनगतिरेषा हंससंहतिः, सुरभिलाङ्गि
सुमफलपत्रजलमात्रेण सूचितशरीरयात्राणि सम्प्राप्तसन्मार्गाणि
क्रमेण कथितान्येतानि तव कृते किञ्चिदपि तापं न हि
करिष्यन्ति मा विचारो महाभागे । १६३

अपि च, १६४

(III-129) चन्द्रार्कवैरमयि सारसकैरवाणां
हंसावलेरहह मन्दगतेन भारः ।
बाधाऽ(निलस्य) फणिभिर्बहुभीमदष्टे-
रङ्गारकात्स्मरभयं न भयं त(वास्ति) ॥ १६५

(III-130) वक्त्रं तदुन्नमय वारिरुहायताक्षि
वन्दारुबृन्दघनवाञ्छितदानदक्षम् ।
अर्च्यं मनोजचरणाम्बुजमद्य वेगा-
दागम्यतामिति करं जगृहुस्तदाल्यः ॥ १६६

तदनन्तरं, १६७

(III-131) सन्तापलोलालिशयावलम्बा
हन्तापतन्त्येव तदंसभागे ।
चिन्तापयोधौ चिरमुद्भ्रमन्ती
सन्ताडयामास सखीर्दृशा (सा) ॥ १६८

(III-132) निश्वासानिलधारया मधुकरान्निर्भर्त्सयन्ती च तान्
तन्वङ्गीग्लपयन्त्यसौ घनतनूतापोष्मणा पल्लवान् ।
कर्षन्ती मुखचन्द्रपाण्डररुचा कञ्जातगर्वोन्नतिं
स्वेदव्यक्तनिसर्गसाङ्कवमदामोदाच्छुकान्धूर्वती ॥

(III-132) परिहासकथाहीना दरहासविवर्जिता ।
विरहातिसहाया सा स्मरहारिवनीमगात् ॥ १७०

तदनु, १७१

(III-133) कनत्सुमकथाव्याजात्कालक्षेपः कथञ्चन ।
कर्तव्य इति कञ्जाक्ष्यः कथयन्ति स्म का(मि)नीम् ॥

(III-134) कमलदललोचने कदाचिदप्यनधिगतकनकगन्धानामखिलेष्टसम्प्राप्तिं, कायवि(हीनानां) करणपटिमानं, बहुकालमूकानां बन्धु-

(रवाक्पौ)ढिं, अतिचञ्चलात्मनामलघुतरवृत्तिं, असद्गण्डा-
नामत्यन्तहितदर्शनप्रीतिं, अगमकोटीनामधिकपल्लवाभिवृ(द्धिं,)
जडजा(ता)नां शाश्वतबोधसामग्रिं, कोपनालीनां कोपभावोपशममपि
समाकलयता माधवनित्यसन्निधानेन भासुरभवदीयतातचरणगिरि-
वरस(न्निहित) सद्गुणारामसरणीसुषमाविशेषमशेषमालोकय भूलोक-
जननयनमोहनं हृदवगाहनम्। १७३

(III-135) पश्य प्रवालनवपट्टपटध्वजाम्र-
हृद्भूरथेऽलिगुणहृद्यपरागचक्रे।
बाले महाबलधुते बहुधोर्ध्वसारि-
वल्लीवधूमरुवकन्दुकवर्ण्यकीरान्॥ १७४

(III-136) कामस्य माधवकरीकृतकाञ्चनेषु
गन्धानिलाप्तकविभिर्गणनाहितेषु।
दूरीकृतांस्तरलदुष्टमलीमसाली-
न्प्रायो विलोकय सखि प्रभुधर्म एषः॥ १७५

(III-137) चेतोजधर्मपतिचैत्रहृताबलाति-
[1]मात्राधिकृत्पथिकमानधनाङ्कनाय।
दीपार्चिरुद्द्रवजतुप्रतिमातिपान-
वान्तासवालिमयि लोकय वञ्जुलाग्रे॥ १७६

(III-138) वल्लीपरागपटवारितपाञ्चिनेय-
पीतो लसन्निजपिशङ्गगुणो मिलिन्दः।
भृङ्गीमुदे स्पृशति भीत इव स्मरेषू-
न्वैदग्ध्यमेतदुचितं विटपालिभाजाम्॥ १७७

1 मात्राकृधित्वविकमानधनांकनाय

(III-139) मदगजमन्थरे किमदर्शि मारुतबालको मरुदयनरोधिपलाशपटल-
तुमुलवनराशिखिन्नवसुधोदितवरपद्मिनीमिनकरमुद्रया समुल्लासयन्,
धृततदीयपद्मरागपालिरामोदमेदुरो महीयसा प्रवालतेजसा पला-
शिवीथीश्रीजयावासो योजयामास । १७८

(III-140) पश्चात्तोऽजनि लीलयैव परयाऽयुक्तक्षमाभोगहा
तलेत्युध्दतपत्रमात्तकनकस्नानं ततो माधवः ।
सारङ्गाक्षि ! सदागतिं स सुमनःपुन्नागमारो(पय)-
द्गलत्कोकिलकाहली प्रथयते वन्याप्रतोलीं (नयन्)॥

(III-141) माद्यत्पिककवीन्द्राणां महामौनभृतां वने ।
माधवेन वचस्सर्वं मन्द्राऽसीत्पञ्चमश्रुतिः ॥ १८०

(III-142) कर्पूर(सार)कदलीत्वगसंख्यनौभि-
र्माध्वीपयोनिधिपरागमहान्तरीपम् ।
[1]प्राप्तालितः पवनपोतवणिग्गृहीत्वा
कर्पूरचेलमदिशत्कलिकालिमुक्ताः ॥ १८१

(III-143) अब्जाक्षि दाडिमफलार्चिरवाङ्मुखस्त्व-
दालापभङ्ग्यधिगमाय धृतव्रतोऽयम् ।
कीरो न ता(म)गमदेव किमीदृशी धी-
र्बिम्बाशिनो भृशमधश्शिरसोऽपि सिध्येत् ॥ १८२

(III-144) पश्येमामयि केतकीं शिवपरित्यागापवादाकुला-
मङ्गालिसपरागभूतिमलिनीरुद्राक्षदामाञ्चिताम् ।
अष्टात्माद्यसिपत्रवासनियमामङ्गीचकारात्मना
(स)वौञ्जीवनहेतुना सुरभिणा सारेण दाक्षिण्यतः ॥

1 प्राप्तालिना

(III-145) बाणास्सुमेषोर्बहवोऽपि तुल्या
न कैतकेनाभिनवा यतोऽस्य ।
सुखानिलेनापि सुमायुधारे-
र्महानभून्मस्तकजाड्यभारः ॥ १८४

(III-146) आलोकाङ्घ्रिनिधानगानवचनास्याधानशीधुक्रियाऽ
श्लेषोच्छ्वासविहासमर्शनगुणैस्सूनानि दास्यन्ति ते ।
साशोकस्तिलकः प्रियालकपरिव्याधौ (च) हेमागम-
श्चाम्पेयस्सखि कोविदारकशचीपुन्नागचूताः क्रमात् ॥

(III-147) तरुणीशिरोमणि तावककरग्रहणजनितानन्द एष माकन्दः, भद्रेभगमने भवदालोककुतुकस्सरसतिलकः, तामरसवदने तावकाऽश्लेषामोदभावुकः कुरवकः, पयोदवेणि भवदीयपदनियोजनपुण्यपाकः किलाशोकः, वामलोचने त्वदीयवदनशीधुमञ्जुलो [1]वकुलः, हाटकपाटले तावकहसितजनितसुमेरुर्नमेरुः राजीवचरणे रमणीयभवदीयरागभाग्यशयालुः प्रियालुः, ललितवचने भवल्लपनकमलयोगजवर्णस्सुवर्णः, कृशावलग्ने भवत्कृताश्वाससरस इन्द्रसुरसः, कन्याशिखामणि कमनीयभवदीयवचनवर्णभारः कर्णिकारः, तेन विरहबाधामवधूय भवदन्तरङ्गदशविधतरुवरसुमनिवहमा(ह)रेति तदाऽहुरगकुमारीमतियशस्या घनवयस्याः । १८६

(III-148) (इत्थं वयस्या)ततिरिन्दुवक्त्रा-
माभाष्य वेणीरसिताहिरूपाः ।
पाटीरवल्लीतनुपार्श्वसीमां
संवेष्ट्य पुष्पापचयोत्सुकाऽसीत् ॥ १८७

---

1 वञ्जुलः

(III-149) बाले बालरसालोऽयं पालेः परभृतां प्रियः ।
पारिजातोऽस्य किसलं वारिजातोत्प्रभाव(हम् ) ॥ १८८

(III-149) मेघालके चालितैतच्छाखासुममपास्य किम् ।
रोहसेऽग्रे कुरवको दोहदे किं न सूनदः ॥ १८९

(III-149) किं चालयसि रम्भां त्वं मुग्धाभिनवकोरकाम् ।
तिलकं [1]पश्यतामेव कलकण्ठि सुमालिदः ॥ १९०

(III 149) पदं ददास्यशोके चेन्मुदं दास्यत्ययं सुमैः ।
उद्यानलवलीमध्ये हृद्या मरुवकावलिः ॥ १९१

(III-149) चालितानि सुमान्यप्राह्याल्लिता रचय स्रजः ।
प्रियालुं कुरु गीत्यैनं शयालुं कुसुमैरधः ॥ १९२

(III-149) परागैः पूरयिष्यामस्सुरागैस्सेर्ष्यवाग्दृशः ।
कनकं कुरु सूनश्रीजनकं मुखरागतः ॥ १९३

(III-149) कामास्त्रकलिकाकाण्डं वामाक्षि न विलङ्घ्य ।
[2]नमेरुराढ्यसुमनास्सुमेरुरिव ते स्मितैः ॥ १९४

(III-149) कुन्दानि परितोष्याणि मन्दानिलचलान्यये ।
वकुला हि मुदेलीनां सकला वदनासवैः ॥ १९५

(III-149) मा मा वासन्तिकाकुञ्जे वामालिनि विशाऽबले ।
श्वासानिलेन निर्गुण्डीं हासायितसुमां कुरु ॥ १९६

(III-149) नानासुमैः केशपाशा मीनाक्षि समलङ्कृताः ।
गिरा कुरुपरिव्याधान्विराजितसुमान्मुदे ॥ १९७

1 पश्यतादेव

2 नमेरुरार्य

(III-149) अमराणां सुधेवाऽसीद्भ्रमराणां सुमासवः ।
दशदोहदरीत्या ते विशदोहमतेऽधुना ॥ १९८

(III-149) कौबेरश्रीर्भवेदस्य ह्रीबेरस्य क्रयो यदि ।
मलयागलतादेशनिलयादुरगीह्यसि ॥ १९९

(III-149) जातिसूनविमर्देन ख्यातिराल्लि घटेत किम् ।
मनसाऽपि न संस्पृश्यं घनसारशिखातलम् ॥ २००

(III-149) लताः किसलहस्ताग्रैः कृतामितलया इव ।
सुमानि मन्मथयशःक्रमानि सखि वीक्षय ॥ २०१

(III-149) शुका बिम्बाधरे मत्ता निकाममिह म(ञ्जुलाः) ।
माघ्यानि सखि गुप्तानि श्लाघ्यानि न सुमानि किम् ॥

(III-149) एलाकुञ्जेषु किं यासि लीलासखि घनोद्यमा ।
नखेन किं कुरवकात्सुखेन न सुमाहृतिः ॥ २०३

(III-149) नारिकेळमहापाळिः शारिकेरणशोभिते ।
न [1]ददाति फलं किन्ते वद दारुणकर्म वा ॥ २०४

(III-149) केतकादिसुमालीनां घातुकालिकुलस्य च ।
एषा भीता ततः कामो योषा(सेव्यो भवेन्न किम्) ॥

(III-150) एवं पुष्पापचयरचनामीरयन्त्यो विधाय
श्रीपांसूनि स्फुटदलपुटीशीधुसाराञ्चितानि ।
नाघ्रातानि भ्रमरनिवहैर्नव्यगन्धानि कान्ता-
[2]स्सूनान्येतास्सुरभिधनुषस्संविभक्तान्यकुर्वन् ॥ २०६

1. ददासि
2. स्सूनान्याराधनायै सुरभिलधनुषस्संविभक्तान्यकुर्वन्

(III-151) सूनालिस्सकला हृताऽथ सुरभिर्मानादटेद्वा किय-
ल्लूनाऽलं किसलावली नु कियदुड्डीना पिकालिर्भवेत् ।
भानाश्वत्फलपाल्यहारि च शुकीसेना कियत्सारवा
नानामध्विह गालितं ह्यलिततिर्मानात्कियद्वेष्टयेत् ॥

(III-151) एतं न जानीम इमां वयस्यामाल्यो नयादानयताङ्गजाय ।
सुमप्रवालाम्रफलासवौघं समर्पयेमेति समीयं जग्मुः ॥

तदानीं, २०९

(III-152) मन्दारमधुमत्तालिबृन्दारवविशोभिना ।
मन्दानिलेन ता रेजुस्सन्दारितसृतिश्रमाः ॥ २१०

(III-153) नव्योर्मिरङ्गनटनोल्बणकोकरामं
कञ्जास्रहोमतलकुञ्जगतालिधूमम् ।
वित्तेशकेलिसरसीविजयाभिरामं
सर्वास्ततो ददृशुरब्जसरोललामम् ॥ २११

(III-154) तदनु सविधचरवनदेवताभिरात्मीयचित्रपत्त्रलतातिलकजालकालोक-वाञ्छया कलितकषणस्य कासारकमनीयमुकुरस्य वलयपतित-कांस्यरेणुपरम्पराशङ्काकरैस्तटकटकजनिततरुपटलगलितसलिलनिकट-परिवृतपरागनिकरैरानन्दतुन्दिलाः, नन्दनसदृशलीलावनविहारदूर-परिश्रान्तकान्ताभोगाय विनतशाखाविलोलकिसलयव्यजनवीजनेन मलयपवनवलनगलितसुमसमुदयेन च रुचिरमञ्जाकरवारिपूरमति-तुषारमपारसौरभोदारमपि रचयन्तीनां शिशिरकिरणशिलाफलक-पालिकाकलितसौपानोपान्तकल्पितालवालमूलसलिलसेकसंवर्धितसे-वन्तिकावासन्तिकामल्लिकादिलतामतल्लिकानां वेल्लनविलोकनेन पल्लवितसमुल्लासाः, पैतामहाश्रमे किरणमालिसाहाय्यरञ्जितकिञ्ज-ल्ककीलिकीलामध्यदेशे चिरकालनियतवासनियमगौरवेण समपास्त-

निजमालिन्यानामभिनवसुवर्णतेजोविराजमानानामिव कमलरजोऽनु-षङ्गपिशङ्गिताङ्गानां भृङ्गाणामालोकनेन तरङ्गितामोदसङ्गतान्तरङ्गाः, तरुणतरणिकिरणच्छदच्छटाच्छादितस्य तपनीयवर्णकर्णिकाधि-वासस्य ताम्रकेसरव्रातजातरूपस्तम्भसम्भारसम्भृतस्य तटिद्राग-परागपरभागपरम्परितपट्टाम्बरवितानसन्दीप्तस्य लक्ष्मीसमारूढ ललितशोणारविन्दस्य स्यन्दनस्य स्फटिकमयान्तरालदारुसङ्घटित-कनकशकटयुगशङ्काकरणामूरीकृतैकमृदुमृणालकाण्डमण्डिततुण्डानां रथचरणमिथुनानामवलोकनेन कुतुकसम्भरिताः, त्रिलोकतरुण-लोकमोहप्रपञ्चनिर्माणचुञ्चुपञ्चशरविरिञ्चेरायतराजतखलीनसूत्रस-ङ्कलितखङ्गाणराजशङ्काकरान् चञ्चलचञ्चुपुटकञ्चुकितसरस-बिसखण्डतन्तुसंवेष्टितांसान् राजहंसान् प्रशंसयन्त्यो, निरततरलतर-तरङ्गमालिकास्फालननटत्कमलकरपुटसरयसमुत्पतनपतनबन्धुरगन्धा-न्धपुष्पन्धयस्तनन्धयदम्भजम्भरिपुशिलाघटितघुटिकाविनोदमोदमेदुर-कमलाकरकनदिन्दिराया महावर्तताटङ्कचक्रसीमनि तिर्यक्प्रसारित-कटाक्षचाकचक्यशङ्काकराणि चटुलशफरोद्वर्तनानि कीर्तयन्त्यः, सार्वकालिकसर्वतोमुखसमृद्धये किञ्जल्कपुञ्जरक्ताक्षताञ्चितं कीर्ण-परागहरिचन्दनं कीलि(ता)ग्रशैवलरसालपलाशं कीड(दलि)धूपधूमं यथातथा जलाधिदेवतया समावाहितवरलक्ष्म्या व्रताराधनसाधन-सुधाधौतनूतनपूर्णकलशधीकृदमन्दमरन्दपूरितोदरदरविकस्वरपुण्डरी-कमण्डलालोकनादखण्डसुखषण्डाः, चञ्चरीककुटुम्बिनीझङ्कारमङ्गल-सङ्गीतनादेन चलाचलकौञ्चकारण्डवमण्डलीपक्ष[1]पुटपटात्कार-पटहारवेण चपलतरतरङ्गबाहासमुत्क्षिप्तशीकराचारलाजसमाजेन च सह बहुदूरमुल्लङ्घितकक्ष्यान्तरं कासारकलितनिजाभ्यागमन-शङ्काकरेण निजवदनचन्द्रचन्द्रिकाद्रवीभूततीरचन्द्रकान्तजातनूतन-

1. "पटपटात्कार" इति पाठो मूलानुकूलः

स्रोतोभरेण समुद्भूतमहाद्भुताः, निबिडपाण्डुपक्षविशेषभूषिततया प्रदर्शितधार्तराष्ट्रमुखश्यामिकं, बहुलहरिविलासभासुरतया मीनकूर्माद्यवतारधारकं, [1]ऊर्मिलाभाशोभितया लक्ष्मणोपभोगभवनं, मानसजय महनीयतयान्तरुन्मीलितनालिकोपरिविकस्वरकमलकर्णिकानिर्निरोधबोधमाधुरीधुरीणं, भूलोकमोहनं सरोवरमालोकयन्त्यो महोदञ्चितरोमाञ्चकञ्चुकितदेहा मुदाऽजनिषत तदम्बुखेलनेहा वरारोहाः । २१२

(III-155) लक्ष्म्या नित्यनिकेतमब्जलतिकाजालोल्लसन्मञ्जुलं
प्रायो लोकजयेन सूनधनुषा प्रक्षिप्तकेतूत्करम् ।
माद्यद्व्यालगराग्निमोचकमिदं मन्दानिलस्याऽरवि-
भ्राजद्राजकरग्रहोत्पललताभाग्यैकभोगस्थलम् ॥ २१३

(III-155) स्नात्वा जलेऽत्र महिते [2]समुपार्चितश्वे-
दिष्टं दिशेन्मदन इत्यभिधाय सर्वाः ।
वासो निधाय परिधाय वरान्तरीय-
मादाय भृङ्गचयमम्बुसमीपमीयुः ॥ २१४

(III-156) तद(नु) सलिले तरुणीजनस्तत्तदंसमवलम्ब्य पाणिना तस्थौ मण्डलाकारेण । २१५

(III-156) कुम्भस्तनीषु कुचदघ्नजलस्थितासु
विस्तारितत्परिधिरैक्षि वृताक्षिलक्ष्मीः ।
कन्दर्पदेवकृतकाञ्चनकुम्भगुम्भ-
न्नानामृणाल(कमल)प्लवमण्डलीव ॥ २१६

---

1. ऊर्मिलाप्रशोभितया
2. सप ...र्चेत.

(III-157) पङ्क्तयायितेन्दुवदनाञ्जलिपाथसां द्रा-
गुत्क्षेपणं हि तदुरोजनितम्बखातात् ।
आर्तैस्सरोजनिवहैस्समम्ब्ज(बन्धु)-
(मा)क्रन्दनार्थमभियात्सरोवदैक्षि ॥ २१७

(III-158) कञ्जासवे दलपुटेन कयाऽपि कीर्णे
कस्याश्चिदैक्षि कबरीकमनीयशोभा ।
साचीकृते सति मुखे सहसा तदास्यै
भामानियोजित(पत)द्भ्रमरावलीव ॥ २१८

(III-159) कासाञ्चिदम्बुजदृशां करपालिरालेः
कस्याश्चिदाननममञ्जयदम्बुमध्ये ।
देह्यद्य पूर्वहृतदीधितिमित्यमर्षा-
दब्जावली विधुमिवाश्रय(सार)भूम्ना ॥ २१९

(III-160) कस्याञ्चित्तपनीयशृङ्गकुहरात्कामं किरन्त्यां पयो
मुग्धा काचन चन्द्रबिम्बवदना मोदेन मुग्धेतराम् ।
वक्त्रांशुस्रुतवारि सद्वरमणीशृङ्गं समेत्याक्षयैः
काण्डैस्तामज(य)त्सराज(म)णयस्सर्वे जयं यान्ति हि ॥

(III-161) मुकु(लयति) मुखं स्वं मुग्धहासेन्दुभासा
परमललितपद्मराग(र्विता) पद्मिनीति ।
करतलमनयत्तत्कर्णिकां कापि सिंहा-
सनमिव कमलायास्साधु हृत्वा दलौघम् ॥ २२१

(III-162) मुग्धे प्रिये (भुवनमो)हिनि भामिनीति
प्राहूय काचिदुदके प्रमदा निमज्ज्य ।
हृत्वा मृणालपटलीमुदगाज्जलेश-
कान्ताजयार्जितयशःकमलामिवारात् ॥ २२२

(III-163) काचित्पद्मकरा रराज कमलेवाऽम्भोधि(म)ध्योद्गता
काचित्कान्तबिसाक्ष(स्र)त्वलया कान्तेव रेजे विधेः ।
काचित्कुन्तलकैरवच्छदकला कात्यायनीवाऽबभौ
काचिध्दूतवरासितोत्पलरजाः कामाङ्गनेवाऽरुचत् ॥

(III-163) पद्माकराम्बुनिधिपद्ममनोज्ञपात्र-
माध्वीसुधारसवलन्मधुपायिराहुम् ।
काचिन्निरस्य कमनी कपटस्वरूप-
नारायणीव ददृशे नयनाभिरामा ॥ २२४

(III-164) हारिद्रचन्दनरसाञ्ज(न)सङ्गिकेली-
कासारशम्बरमलक्ष्यत कामिनीनाम् ।
शोणापगामिलितजन्हुकलिन्दकन्या-
स्रोतोवदत्र सुदृशामभिमज्जनार्थम् ॥ २२५

ततः परं, २२६

(III-165) कूलं ययुस्सकुतु(कं) कृतवारिलीला
निष्कासमीतनुनिपक्ततरार्द्रचेलाः ।
वाराशिनिर्यदभिवार्मुकवारिदाभ-
वान्ताम्बुकुन्तलभरा वनजायताक्ष्यः ॥ २२७

तदनु, २२८

(III-166)[1]कान्तास्ताश्च नियोज्य (कल्पक)भत्र काम्यं दुकूलं नदी-
कन्यायाः कबरीं विधाय विजलां कल्हारदामाञ्चिताम् ।
कर्पूरोज्ज्वलगन्धहारकनकाकल्पैरलङ्कृत्य त-
त्काङ्क्षोक्त्या स्वयमप्यलङ्कृतियुताः कामार्चनेहाः स्थिताः ॥

1. कान्तास्तावनियोज्य

(III-167) नारङ्गागममन्त्वघोषमतिकृत्सारङ्गनादाञ्चिते
नीपावेष्टितकाञ्चनागकलिकादीपावलीराजिते ।
श्रीराजत्तिलकद्रुमालिसुमनोवारासवार्घ्यान्विते
राराजत्सहाकारपल्लवमणीनीराजनालङ्कृते ॥ २३०

(III-167) अञ्चद्द्राक्षावृते रम्भाचञ्चन्मन्दानिलाञ्चिते ।
तापापनोदिकर्पूरधूपाभिललिते (त)ले ॥ २३१

(III-168) लामञ्जकाकलितलालितकायमाने
सेवन्तिका(तुहि)नसिद्धपरागवेद्याम् ।
मञ्चे महासुमध(ने) मृगनाभिप((ङ्कैः)
(नार्योऽ)लिखन्मदनमम्बुजकर्णिकायाम् ॥ २३२

(III-169) तदीयवामाङ्कतले रतीं तां
तदग्रभागे मधुता(रकेशौ) ।
तत्पार्श्वयोस्तान्पिककीरभृङ्गान्
गन्धानिलञ्चाकलन् गरिम्णा ॥ २३३

(III-170) ध्यानं मानसवासिनस्त्रिजगतीधाम्नस्तवावाहनं
श्रीनारायणराजमानजनुषश्शीतार्घ्यपाद्ये विभो ।
क्षीराम्भोधिसुताङ्कशायिमहसः क्षीराभिषेकक्रिया
गन्ध(क्ष्मा)धरगन्धवाहसुहृदो गन्धस्सुमेषोस्सुमम् ॥

(III-170) धूपस्सारपराक्रमोष्मसुरभेर्दीपस्तमोभीहृतो
माध्वीमञ्जुफलानि कीरमधुपव्राताश्रितस्येति ताः ।
भक्त्या सम्परिकल्प्य भावजनुषेऽहङ्कारहन्त्रे रति-
प्राणेशाय नमो नमो नम इति प्रायः प्रणेमुस्तदा ॥

(III-171) काम कञ्जास्त्र कमलाकामुकात्मज मन्मथ ।
कन्दर्प कमनीयेति कलकण्ठयो व्यजिज्ञपन् ॥ २३६

(III-172) पाटीरागरुपारिजातलतिकापर्याप्तकेलीवनं
चित्तं तावकनर्ममन्दिरमिदं चैत्तो भवत्किङ्करः ।
अश्वङ्गाव दयासमुद्र विनयादत्तत्यवस्त्रर्पणं
शीतांशोरमृतार्पणोपममिति श्रीभावुकाङ्गीकुरु ॥ २३७

(III-173) धानुष्कवर्यमवनीधरधर्ममीशं
ब्रह्मास्त्रिणं तृणशरासनसूनबाणैः ।
अर्धाङ्गशेषमकरोरहहातिरोषा·
त्सङ्कल्पसिद्धविशिखो न सुमेरुजित्किम् ॥ २३८

किमु न किसलशाखाप्रसारश्शतकोटिसारः । २३९

(III-174) अद्रिश्शरासनमन(न्त) इषुः फणीन्द्रो
ज्येशस्तथाऽप्यहरदेकमुभे पुरं वा ।
किं पूर्णपौरुषमिति त्रिजगत्त्वयेक्षु-
कोदण्ड साधु न जितं किमु कोमलास्त्रैः ॥ २४०

(III-175) विधेस्त्वदस्त्रं विशतस्त्वदोजो-
गुम्भात्तरौप्याद्रिगुहस्य शम्भोः ।
शौरेश्च ते शौर्यविदः क्रमेण
रजस्तमस्सत्वभरोऽनपायः ॥ २४१

(III-176) मोहसम्भृतबालायां साहसं न तवोचितम् ।
(नै)षाद्रिचापो दयया योषा रक्ष्याऽलसानिलात् ॥

(III-177) लोकत्रयीजिदभवाद्य(वपु)र्ध्वजस्ते
युग्मैककृच्छ्रनिदर्शनमर्धजानिः ।
नाली(क)पालिरघु(नाऽपि विधिस्त्वदा)ज्ञा-
वाहश्चिरं वनजबाण स पद्मिनीशः ॥ २४३

(III-177) रतिरमण युवतीजनविजये [1]महान्तव को (वि)हारः ।   २४४

(III-177) पङ्केरुहास्त्र परिलालय पङ्कजाक्षी-
मामोदया(लि)चिकुरामलिशिञ्जिनीक ।
कीराश्च साधु परिपोषय कीरवाणी-
मानन्दयेन्दुवदनाममृतांशुबन्धो ॥   २४५

(III-178) मास्त्वङ्गनावधमहाघपरम्परेति
सम्प्रार्थिते (स)ति सरोजशरे सखीभिः ।
गन्धानिलेन वलितं गलितं प्रसूनैः
कीरालिभिश्च (ल)लितं रणितं तदानीम् ॥   २४६

(III-179) अग्रे स्थितं स्मरमिवारमवेक्ष्य भीतां
विक्षोभविस्मृततनुं विवशां विलोलाम् ।
वातार्भकाहतलतामिव तां वयस्या
बालां विलोक्य बहुबाष्पदृशो बभूवुः ॥   २४७

तदनु मदनवेदनानिदानकलाविशारदा जगदुः ।   २४८

(III-180) मोहध्वान्तसनिद्रदृङ्नलिनयोर्मुग्धे हिमाम्भः कथं
स्वेदोद्गदयखिन्नचक्रकुचयोश्शीतांशुनामाप्यलम् ।
आशावृन्तचलासु सु(न)सविधे किं ता(ल)वृन्तानिलै-
स्तप्तेऽस्यास्तनुहेम्नि पल्लवपुटीतेजोर्पणं किं क्षमम् ॥

(III-180) स्मराग्नितप्तहृत्पात्रस्नेहपूरे समुल्बणे ।
पद्मायताक्ष्यः किं कार्यं पटीररससेचनम् ॥   २५०

(III-181) किं वा भणामः किं कुर्मः किं शान्तिकरमौषधम् ।
का प्रष्टव्याऽत्र किं मान्द्यमिति ता व्याकुलाः स्थिताः ॥

---

1 महावतव कोहारः

तदनु विज्ञाय भुवि विशेषज्ञाः, २५२

(III-182) अङ्घ्र्योः पल्लवपालिमूरुयुगले [1]रम्भात्वचो राजिताः
पाण्योः पद्मचयं बिसानि भुजयोर्गुच्छानुरोजोपरि ।
तस्या गण्डतले तमीशशकलानिन्दीवरे नेत्रयो-
र्ह्रीबेरं कबरीभरे समगुणं (स)ख्यो मुदाऽयोजयन् ॥

अथ सरसिजदृशा वसुयोगमाकलय्य समुल्लासय समुज्जीवयेति सखीजना मुहुःप्रार्थयन्मदकर(हासं मृदुल)विलासं, मधुकरभासं मतरतिरासं मधु(सहवा)सं मधुरशरासम् । २५४

(III-183) (त)द्वाक्यमध्यगतनद्व(सुना)मधेय-
वर्णश्रुतेः पुन(रवाप्तधियं वयस्याः) ।
(एनां विकाशिदृशमिन्दु)सुधाविनिद्र-
नी(ला)ब्जिनीमिव निरीक्ष्य मुदा तदोचुः ॥ २५५

(III-184) [2]मु(च्या)लि भीतिरिह मन्मथदेव ईद-
[3]गाराधनातिमुदितः परमाविरासीत् ।
सौख्यावहाश्शुकगिरस्सुमनःप्रसादो
भद्रावहोऽभिलषितं हि भवेत्तवेति ॥ २५६

तदनु, २५७

(III-185) [4]लीलावनाह्लेखकुलेशनील-
सालावृतं सद्म जगन्मनोज्ञम् ।
नीलालका निन्युरनङ्गलोलां
बालां शनैर्बालशशाङ्कफालाम् ॥ २५८

---

1. रम्भातलदो राजिताः
2. मुस्त्वालि
3. गादनाति
4. लीलावनाह्लेखकुलेशसालजालावृतं

कामाक्षि देवि करुणामयि कामकोटि
काञ्चीपुरीश्वरि कदम्बवनीनिवासे ।
कान्तैकचूतपतिना कलितावधाना
कर्णामृतं कलय काव्यमिदं मदीयम् ॥ २५९

इति श्रीकामाक्षीदास कालहस्तिकविकृतौ
वसुचरित्रे चम्पूकाव्ये
तृतीय आश्वासः

---

कालहस्तिकविविरचितं

# वसुचरित्रम्

## चतुर्थाश्वासः

(कामाक्षि देवि करुणामयि) कामकोटि
काञ्चीपुरीश्वरि कदम्बवनीनिवासे ।
कान्तैकचूतपतिना कलितावधाना
कर्णामृतं कलय काव्यमिदं मदीयम् ॥ १

(IV-2) बाला सखीकरालम्बा शैलाधिपसुता शनैः ।
लीलामणिगृहं भेजे लोलाऽथ मदनेषुभिः ॥ २

(IV-3) तदनु सम्प्रेषितकपटतापसेन वसुविभुना कुतुकसहितेन गूढतया स्थितं सुमकुञ्जपुञ्जं, समयानुगुणनिहिततदीयचरणाङ्कसरणिं, सोपचारतरुणीसमर्पिततन्निषण्णसौवर्णपीठं, तदनुबिम्बभाग्यललिततरभित्तिमपि सा समीक्ष्य तपनीयमन्दिरे तदानीन्तनवरालोकमिदानीन्तनमिव विभावयन्ती विरहातुरा विभवादरा ललम्बे किसलयकदम्बे सुमाकल्पे महातल्पे । ३

तदनु, ४

(IV-4) त्वद्भ्रातृजां परिणयेत्त्वरया वसुस्तां
तद्भूमतः कुलिशभीर्न हि तावकानाम् ।
इत्यद्रिराज[1]तनयाय हितोपदेशे
लोभादिवाप जलधिं किमु लोकबन्धुः ॥ ५

1. तनयस्य

(IV-5) सूर्यस्य कालवशशोषितचण्डिमाद्-
रस्तालयाप्तिषु करावृतदुर्गक्लृप्ताः ।
आप्ताः किमातपभरा गिरिकूटरक्ता-
स्तन्मूलगान्धतमसं किमनातपालिः ॥ ६

(IV-6) परानुषङ्गात्तवराङ्गराग-
मिनं शनैरक्षिगतं समीक्ष्य ।
सा पद्मिनी सङ्कुचति स्म वक्त्रं
च्छाया निवृत्ता न च भा बभासे ॥ ७

(IV-7) सन्ध्या सा पिहिताब्जसद्मसदिनान्वेष्यब्जिनीरागमा
[1]खायःपात्रतमोञ्जनाप्त्यपरदिक्स्त्रीक्लृप्तदीपद्युतिः ।
पान्थाली(भय)कृत्प्रदोषकरिभूशृङ्गारधातुप्रभा
द्वैजोक्तीहितवल्लभागमनिशाकाश्मीरपत्राकृतिः ॥ ८

किञ्च, ९

(IV-7) दिवसपरसमयमिषहरिणहृततपनरघुकुलतिलकरुचिररुचिभरयुवतिमणि-
मवितुमतिकलुषतिमिरचयदशवदनजनितभयमधिकमभिविरलयितुमन-
लभुविविबुधततिनिहित[2]क्षितिसुतानिरतिशयमहिमवती वह्नगौरगा-
त्रीव सन्ध्या सदोजो रराज । १०

(IV-8) [3]अब्जास्यनिर्यदलिधूमयुता समूर्छा
[4]नाथानवेक्षणरुजा नलिनीति कोकः ।
अर्काय वक्तुमगमन्नु वधूं च हित्वा
कार्यं निजं न कलयन्ति हि मित्रभावाः ॥ ११

1. त्र्यस्वात्र । 2. ...... नुत ।
3. अब्जास्य सौयदलिधूमयुता । 4. सौधौनवेक्षण ।

(IV-9) वक्त्रेण वक्त्रमनुयोज्य वलत्पतत्रै-
राश्लिष्य गाढमधिचञ्चुगलद्बिसेन ।
संसूचितद्रुतनिजागतिरङ्गनायै
चक्रो ययौ चलदिनस्तदधीनवृत्तिः ॥ १२

(IV-10) सायंनटन्मृडजटात्रुटिताब्जराग-
[1]प्रातीतिके वरमणौ पतितेऽ[2]पराब्धौ ।
ताराः किमूर्ध्वततोयकणास्तमांसि
[3]सन्ध्यानलस्य सलिलाणुजुषो नु धूमाः ॥ १३

(IV-11) राजीवोदरमूर्तिराजितरवौ रत्नाकरं संविश-
त्यूष्मान्ते मुकुलीकृताब्जनयने सन्ध्यातटित्पूर्विकाः ।
जातास्सन्तमसाम्बुदा जगति तां निम्नोन्नतोर्वीं समां
सद्यश्चक्रुर्ननु सर्वतोमुखमहासारप्रसारैरलम् ॥ १४

(IV-12) अथ वासववाहनाहङ्कारमाहरन् , अग्निमार्गमनुधावन् , अन्तक-पाणिदण्डताण्डवमाखण्डयन् , असुरघोराकारगर्वमान्दोलयन् , अम्भोधिनाथगेहमामूलमाविलयन् , अनिलमतिशयरजो[4]वमनाढ्यं चिरमालोलयन् , अलकेशनिधिमुद्रामात्मवशामारचयन् , अनेकपासुरवैरिवासस्फूर्तिमामर्दयन् , अवनीतलं कबलयन् , अम्बरतलमाक्रामन् , [5]अब्जजाण्डकटाहमप्यतिलङ्घयन् , समुज्जृम्भते स्म चालितादित्यसंध्याभिचारहोमचित्रधामवृत्रभूमा । १५

1. प्रातीतिकां ।  2. वराब्धौ ।
3. सन्ध्यानलसतिलाणुजुषो ।  4. वमनाढ्या ।
5. अजजाण्ड ।

(IV-13) शक्रस्याहल्याहृतः स्वाश्मभूषा
चूडाबर्हं बल्लवी[1]जारपुंसः ।
ग्रीवाभूषा दारुकाजारशम्भो-
र्ध्वान्तं चिह्नं तारकाकामुकेन्दोः ॥ १६

किं च, १७

(IV-13) अभिनववरनिधानाप्तिहेतुदिव्यसिद्धाञ्जनमपूर्वनयनमखिलफलदायक-मिदं विसृमरतिमिरकुलमिति कुलटावलिः स्तुवन्ती सती निजतनुं भूषयामास दूतिकां प्रेषयामास विरहतापं शोषयामास सखीभिश्च भाषयामास । १८

(IV-14) तमसा विधुते सूर्ये तत्सन्ततिरिवाबभुः ।
संरुद्धा रक्षिताः स्वाङ्काः साग्रकज्जलदीपिकाः ॥ १९

(IV-15) अथ सन्ध्यानटन्महेश्वराट्टहाससंस्फुटितसरोजजाण्डरेखाविनिःसृता-वरणसलिलकणिका इव, सन्तमसलहरीनिमग्नसकलवस्तुजनित सान्द्रबुद्बुदपरम्परा इव, मन्देहदनुजमथितृमार्तण्डसाहाय्यागत-विप्रवेदमन्त्रवर्णा इव, गगनचरसमर्पित(हरिपद)[2]गिरिशकेशपाश-गगनसूनकलिका इव, चरमगिरिपोतवणिगव(तारित)तरणिबहिः-प्रसारितसलिलमग्नमुक्ता इव समयवर्तकतमःपटलपटविसारितसार-मुक्ताकोरका इव तारका व्यजृम्भन्त । २०

(IV-16) रम्योदयारुणमरीचिरजोगुणेन
स्रष्टुं जगत्तिमिरकल्पसमुद्रमग्नम् ।
आयास्यतो द्विजपतेः कमलासनस्य
प्राक्पाण्डिमाऽस सितपङ्कजपीठक्लृप्तेः ॥ २१

1 चोरपुंसः
2 गिरिशगगनकेशपाशसूनकलिका इव

(IV-17) निखिलदिगबलाभिर्ध्वान्तनैपथ्यवर्ये
गगनमहितरङ्गाद्गालिते मन्दमन्दम् ।
रजनिनटयुवत्या राजरेखार्धबिम्बाः
[1]प्रबभुरमलमुक्तापट्टफालास्यरीत्या ॥ २२

(IV-18) तातामृताम्बुनिधितापकरौघकीला-
नादाय राजदुदयारुणभाच्छलेन ।
क्षिप्त्वाऽरिहृत्सु सितदीधितिकीर्तिभाज-
स्तारापतेस्तदनलात्तनुनीलिमा किम् ॥ २३

(IV-19) प्राग्व्याधमौलिमणिना प्रबलाभ्रवन्यां
प्रागंशुचेलशकलप्रकटीकृतायाम् ।
आखेटके विरचिते चिरमन्धकारा
माद्यद्रजा इव [2]गुहाबिलसीम्नि पेतुः ॥ २४

(IV-20) उदयाद्र्युलूखलमुपेयुषो विधो-
स्सहजाङ्कशौरिसहितस्य सीरिणः ।
करघट्टिताभ्रकलशाच्चकोरगो-
कुलिनां जगाल घनकौमुदीपयः ॥ २५

ततो जाता घूर्णितपयोधामसंरम्भा महारम्भाः । २६

(IV-21) ज्योत्स्नाभ्रसिन्धुलहरीविहरत्सुधांशु-
माहेन्द्रदन्तिमथितोज्झितकैरवाणि ।
ताराकुलानि किमु तद्वमथुप्रसारा
[3]नीहारनीरकणिकानिकराः किमासन् ॥ २७

1 प्रबबुरमल 2 महाबिलसीम्नि
3 नीहारनीरकणिका निशाकराः किमासन्

(IV 22) **नाहं मित्राधिकाराक्रमणमिति निशां नाऽकरोदुज्ज्वलाहं**
**नौवं शीतं वितेने नरक इति महाबाडवाक्षेपकोपात् ।**
**वृक्षच्छायां न जह्रे गतिवियुगलसेत्यश्मजातिं न चक्रे**
**रम्यां ज्योत्स्नारसाढ्यां प्रतिकरणधिया राजकान्ताकृतेर्हि ॥**

(IV-22) इति जगति निखिलजनजेगीयमानो निराकृतनीरजाभिमानो निर्धौतहरशिरःस्थानो विधूतकुमुदकुलमोहो विभासितसुधाजलनिधिदेहो विरेजे चन्द्रिकासमूहः । २९

(IV-23) तदनु स पुनरविकलपृथुलरजनीरमणवलयितसुमविशिखधनुरुदितकरकुमुदसमुदयशरनिकरनटितविशदपरागसारैरापूरिताकारः; नितान्तविकचतरमल्लिकामतल्लिकाकुसुम(श)बलितमृदुलदलपुटान्तरालतलविगलितविमलतममधुरसनियोजितशशिरकिरणसारान् प्रफुल्लहल्ल-(क)कुसुमरजोभरशर्कराविशेषसम्मिश्रितानानासमागल च [1]जिघत्सतामुन्नतगलानां (चल)च्चञ्चुसुन्दरीबृन्दानामानन्दबाष्पबिन्दुसन्दोहेन तुन्दिलायमानः; निरतिशयकुमुदपतिकिरणभरचिरजनितहृदयवलदसहतरविरहभववेदनया निजरमणमपरिमितगहनभुवि भृशमन्विष्याऽन्विष्य तत्र तत्रानवेक्ष्य घनतरपरितापमेत्य सरोवरान्तरालेषु स्वकीयां च्छायां समीक्ष्य दृष्टो मया [2]चिरमिष्टोऽधुनेति मुदा संस्प्रष्टुमभ्याशमेत्य सलिलगतनिजप्रतिबिम्बेऽन्यतो गते सति समीपगतोऽपि नेता कुतो मामुपेक्षत इति चिन्तासन्तापजातनिश्वासपरम्परातान्तानां कोककुलकान्तानां बहुविधाविलविलापश्रवणजनितकरुणाभरद्रवीभूतानामिव चन्द्रकान्तानां गलितविशदसलिलधाराभरेण [3]साराकारः; विशदतरकौमुदीविभाविभासमानमरकत-

1 अघनतामुन्नत 2 मिष्टोऽधुनेति
3 सोरोंकारो

मणिरचितचषकेषु [1]रिक्तेषु सर्वेष्वपि मधुपूर्तिशङ्कया चञ्चलनखाञ्च-ल्लेन बहिर्विसारयन्तीनां, आसवपूर्णभाजनेषु बिम्बितचन्द्रबिम्बममृ-तोद्गमाय मुद्रिताञ्जलिपुटैर्निपीड्य मधुरममृतमुदितमिति वासिततदा-सवं निपीय कलङ्कशङ्कया वासनार्थनिहिततदिन्दीवरदलानि परिहर-न्तीनां, प्रतिफलिततारकानिकायं पक्वगोस्तनीफलमनीषया मुधा सरसनाग्रनादमास्वादयन्तीनां, निजवदननलिनपात्रेषु निहितमैरेयस्य प्रियतमजनासवार्पणसमये परिमलार्थनिहितसहकारपल्लवधिया स्व-मधुराधरेषु सवेदनं पतिकृतक्षतेषु कलक्वणितकङ्कणाङ्कितकरविधून-नपुरस्सरं पारवश्येन कनीनिकाः पक्ष्माञ्चलेन संयोज्य कमनीयसी-त्कारकलकण्ठभेदानाकलय्य पानशालापुरोभागभासमाननलदकाय-मानावकाशदेशलक्ष्यचन्द्रिकाकणान् सुममनीषया संगृह्य पति(षु) पातयितुमुद्यतानां, कादम्बरीमदोन्मादजातमोदातिशयेन करकमल-तालघट्टनां सङ्घटय्य गानानुगुणनानाविधनटनमारचय्य निजनर्त-नावलोकनहृष्टैरवेष्टसम्प्रेषितपारितोषिकपाण्डुपटविशेषधिया विपु-लाजिरराजमानमुक्तामयवेदिकाश्रिसक्तातिमोहनमयूखरेखाः कराङ्गु-लिभिर्विस्तार्य समाच्छादयितुं महेच्छानां, अतिप्रबन्धगन्धोत्तमा गन्धानु(बन्ध)बन्धुरमन्थराणां उदस्तनासामणिविभासारैरुल्लसितग-ल्लसितलोध्ररेणुवारैरुन्नमितावटुविलम्बिहारैरूरी[2]कृताऽजिपारीणः ; क्वचनसीमनि तुङ्गतरचन्द्रशालाविशालाङ्कणेषु चन्द्रिकाञ्चितेषु सुकुमारपदविन्यासानां सूक्ष्मपाण्डरपटविशेषाः प्रसारिता इति पादपल्लवायासानविचारयैव चञ्चचन्दनतिलकद्रवीभावं चारुहारो त्कम्पचपलकुण्डलहीरकोरकप्रचारं च यथा तथा समागतानामा गामिपौरुषकेलीलीलापरिचयप्रकारमिवारचयन्तीनां नूतनयुवतीन

1 रिक्तासर्वेष्वपि
2 कृताऽजिपारिणः

लिकुचफलसमकुचचूचुकसविधप्रदेशजनितयौवन(व)यो विशेषदृश्य-( मान )पाण्डिमकणातिशयेन समृद्धोदयः; मनोज्ञेषु केषुचित्प्रदे-शेषु सरसालङ्घनीयदूतिकावचनैश्चरणविन्यासाननेकयोजनाविषया समागत्य विहारहर्म्यान्समेत्य शातकुम्भस्तम्भपार्श्वे निगू(ढ)स्थितानां कुचोत्तरीयेषु वल्लभाकृष्टेषु किञ्चिन्निपत्य सात्विकविकारोदितशारीर-कम्पेन स्वत एव विगलितासु नीवीषु विमलवसनाञ्चलरेखाभरेषु सत्वरं रमणचरणाङ्गुलीदंशिकागृहीतेषु साध्वसातिकम्पानामन्यतो गन्तुमदक्षतया पतिहृदयपञ्जरेषु विलीनानां [1]नाथपरिहासचाटु-वचनाकर्णनोद्यतानां मुग्धाङ्गनानां वातायनसविधशीतांशुबिम्बमा-लोकयितृधूर्तसखीसस्मितवदनमिति शङ्कया समाच्छादितधवलवस-नरेखाविशेषकान्तिपूरस्य कृतचोरभावः; कतिपयतलेषु सद्यःकृता-धरक्षतादिलाञ्छनैस्सहेत्य कुहनाविनयपूर्वकं निजाधरमङ्गुलीभिराच्छाद्य सल्लपतः पल्लवतल्लजान् सूनदामभिराबध्य बन्धनशिक्षणाय वाताय-नागतशीतांशुकिरणजातायतदण्डान्प्रति प्रसारितकराणां मुग्धा-बलानां नखरनिकरसुषमाविशेषेण जातसम्पोषः; वेदनानुमेयमदन-करालकरवालधाराधिभरेण धवलवसनदामानुलेपभूषातिमुपेत्य सायंसमयदष्टकर्पूररम्भाङ्कितसङ्केतकुञ्जमागत्य तत्रत्यकुञ्जपुञ्जम-खिलमेकाकारतया किञ्चित्कारमविज्ञाय तद्विशेषं तदनु वासना-विशेषेण निश्चितसङ्केततलमवगत्य [2]निजसमयनिकुञ्जनिलयान्निविश्य पश्यन्तीमनःशोधनाय जाररमणीषु परतो निगूढेषु तदा कमपि नावलोक्यारण्यरोदन[3]मन्वर्थमासीदिति निःशब्दं रुदन्तीनां निश्चे-ष्टानां तासां [4]मनःखेदापनोदाय तत्समक्षमेत्य तदश्रुपूरमपमृज्य

1 नाथपरिहासशाठ

2 निजनिजसमयनिकुञ्जसीलयानाविश्य

3 मन्वर्थिमानिति निःशब्दं रुदन्तितां

4 मनःखेदसनोदाय

गाढालिङ्गनादिबहुविधबहुमानेषु जारवल्लभैः कृतेषु नयनान्युन्मील्य [1]पश्यन्तीनां विस्मयसूचनलोचनप्रभाजालेन वेलातिशायिलीलाञ्चितः; भूयोऽपि मदनरतिकलास्थानविशेषमधिगम्य कान्तनिरतिशयसुरत-रचनापारवश्येन व्यत्यस्तचेलावरणेन साकं सौधाजिरेषु समेत्य चन्द्रिकास्वादमोदशालिनीनां कामिनीनां [2]कपोलभातधवलांशु प्रदर्श्य भवदीयवदनचाकचक्यहरणाय चन्द्रमाः समागतोऽत्र [3]वसति वसतिरनुचिता न इति पुनारताय वनिताततीः प्रलोभ्य [4]चिरमा-कर्षतां विटशिखामणीनां शिखाबन्धविशेषगलितविकचसुमगुच्छै-रच्छतया शोभमानाकृतिः; अभिव्यक्तशुद्धवर्णब्रह्मतया सर्वानुर्वी-तलस्थान्सर्वज्ञानाकलयन्; तारवादधौरेयतया सकलानप्यचलान् रजताचलानिवारचयन्; [5]पद्माहितपादप्रभूतनूतनस्रोतोविशेषतया निखिलभुवनमालिन्यानि वारयन्; सरोजभवाण्डमण्टपान् शङ्ख-लिप्तानिवाकलयन्; मन्मथयशोभरमरीचिवीचीसध्रीचीनो विजृम्भते स्म चन्द्रिकामण्डलो जगन्मण्डले । ३०

(IV-24) **रजनीकरोऽपि रतिनायकोऽपि हा**
**मलयानिलोऽपि महितास्त्रयोग्रयः ।**
**सहिता इहाद्रिदुहिता कथं जये-**
**दहितानिमानिति [6]हितालिचिन्तिता ॥** **३१**

(IV-25) अथ कलानिधिकलाकृतकपोलतलास्फालनात्पुरा, कामशरकलित-कटाक्षाहतेः पूर्वमेव, मधुपकुलरचितमस्तकाक्रमणात्पुरा, प्रवाल-कृतपाणिकर्षणात्पूर्वमेव, गायकपिकारचितगलग्रहात्पुरा, कीरकृत-

---

1 वीक्षन्तीनां
2 कपोलधौतधवल्यं
3 वसती वसतिरनुचितात्र न
4 चिरमार्षितां
5 पद्माहित
6 हिताविचिन्तिताः

केवलोक्तिकलहात्पूर्वमेव, मलयानिलाकलितमञ्जुलासुमारुताभि-
मर्शनात्पुरा, [1]राजहंसरचितचरणानुधावनात्प्रागेव विज्ञाप्य गिरिजा-
शयं विज्ञाय च वसुराजमानसमतिशयशुभोदन्तमाहरानीति सखी-
ततेरभिधाय घनसारगौरं शैलजाहारं समादाय मोदावहं तदीय-
नगरं जगाम दुष्करघटकवाणी हर्जितैणी मधुपवेणी मञ्जुवाणी;
( निर्गतायां च तस्याम् ) । ३२

(IV-26) क्रीडागृहेन्दुमणिक्लृप्तविचित्रभित्ती-
जालांशुजाल(क)मयीः कलयन्तमन्तः ।
तापावहं रिपुतमं भुवि पद्मिनीना-
मूचेऽथ सा परुषमुग्रशिखामणिं तम् ॥ ३३

(IV-27) राजास्याजनतोद पातकविधो राजा कथं वा भवान्
राजत्वेन किमास चक्रकुतुकं किं राजते सत्कुलम् ।
हानं वाहिभयस्य राजजनुषो हा रश्मिमात्राफलं
दोषार्थं तव राजता विरचिता दुर्मेधमा वेधसा ॥ ३४

(IV-28) कामं तमोघनकलङ्कमयं सदिन्दो
[2]कान्तावधाशुगरलं कलयेद्भवन्तम् ।
षोढांशतोऽथ दशधा च किमब्धपूर्वं-
[3]पक्षांशुभिस्तव पुरा बहुलार्तिखेदाः ॥ ३५

(IV-29) कण्ठं तन्मलिनीचकार गरलं कं नारुरोहैश्वरं
तस्मानम्बुभरांस्तथा स जलधेर्नाक्राथयद्वाडवः ।
विष्णोः कुक्षिमगाद्विधो न निरगाद्भित्वा हृदग्निर्दंवो
ग्रावौघं पविरातनोद्गतमदं नाद्रावयत्त्वं यथा ॥ ३६

1 राजहंसरजित 2 कान्तावधासु गरलं
3 पक्षांसुभि

(IV-29) क्रूराग्रगण्य रजनीश कुपीटयोने
त्वत्कारणारणिमहात्रितपस्विनेत्रम् ।
तीक्ष्णांशुवीक्षणकठोरतपोऽग्निनाऽपि
किञ्चिन्न विस्फुटितमित्यपि किं विचित्रम् ॥ ३७

(IV-30) विषराशिजनिर्विषेण साकं
विषभृन्मार्गगतिर्विषाद्मौलौ ।
वसतिस्तव वक्रता हि बाल्येऽ
प्ययि दोषाकर जीववैरमर्हम् ॥ ३८

(IV-31) लक्ष्मीपतिप्रहितलावकचक्रमिन्दो
त्वामात्मनामकभिदा त्वरितं विचार्य ।
त्वद्वैरिराहुतनुमेव बिभेद [1]नासून्
त्वद्दोष एव तदसाध्यतमं किमस्ति ॥ ३९

(IV-32) त्वं कालनेमिगुणशील तमीच(रत्वा)-
(द्गर्भस्थलोकगण)तापयितेतिभावात् ।
[2]निष्कासितो न निहतो हरिणा रमानु-
रक्तेन हा जगति रागवतां क्व धर्मः ॥ ४०

(IV-33) भावे क्षणं धृतवतो भरणीपते त्वां
पद्मापतेरपि वधूवधपापपाकः ।
त्वत्खण्डधार्यहह तादृशशङ्करोऽपि
लोकालिनिर्मथनलुब्धमना न किं वा ॥ ४१

(IV-34) श्रीगेहलीलाहर सिन्धुजन्म-
न्नब्जस्त्वमब्जाहमितीरणाय ।

1 सारान्

2 निष्कासितो न विहितो हरिणा रमानुरक्ते सहा जगति रागवतां क्व धर्मः ॥

कथं न लज्जा मम हा कलाद-
स्सहोदराश्रीहृतिसादरो हि ॥ ४२

(IV-35) अम्भोरुहाहित निजालयभञ्जनाय
स्रष्टा किमर्थमसृजत्सहसा भवन्तम् ।
जैवातृकं च कृतवा[1]ञ्जडजातजन्मा
पापी चिरायुरिति वाक्परमा हि लोके ॥ ४३

(IV-36) [2]पूज्येशविष्णुविधिपूषसु दैवतेषु
पूर्वेषु सत्स्वपि पुरोग्निकलाप्रदानम् ।
ताम्यद्वियोगितरुणीजनदेहदाह-
साहाय्यकार्यघटनाय सरोरुहारे ॥ ४४

(IV-37) कमलारिं विनिन्द्यैवं कमलास्त्रमदूषयत् ।
[3]कमलाक्षी वियुक्ताक्षिकमलानीकरं स्मरम् ॥ ४५

(IV-38) स्मरानलसमाङ्गे मा शरानलशिखां किर ।
अरातिरबलानां किं स्मरातिकरुणामयि ॥ ४६

(IV-39) शम्बराहित शतच्छदशस्त्रि-
न्भो निशाटरिपुपुत्र किमर्हम् ।
शम्बराङ्कजलजारिनिशाट-
ख्यातिना शशभृता तव सख्यम् ॥ ४७

(IV-40) हा जीवमात्रचरितार्थक हर्षहेतु-
मत्सूक्तयस्त्वयि मरुत्तुलिता मनोज ।

1 जडजातजि.......... 2 पूज्येक

3 कमलाक्षि द्वियुक्ताक्षि कमलानिकरं स्मरन् ।

निद्रां गतस्य महतीं हरनेत्रकीलै-
बोधो भवेन्नु तव भूरिनुतैर्नतैर्वा ॥ ४८

(IV-41) आद्यन्तनीरसशरासमधूद्धतज्या-
वन्यातिलुब्धभटवन्हिसुहृद्रथैस्त्वम् ।
कान्तास्तुदस्यलमिदं स्मर को नु धर्मः
को वा गुणः किमु बलं तव काऽधिरूढिः ॥ ४९

(IV 42) अहेतुरत्याग्रह इष्टवाक्येऽ
प्यमर्षभावो मधुना न ते किम् ।
अतोऽनिलारोहणमण्डजेष्ट-
मङ्गक्रियाविस्मृतिरप्यजस्रम् ॥ ५०

(IV-43) नक्रग्रस्तगजं ररक्ष न स किं नारायणस्सत्वरं
प्रह्लादं तमपालयन्न किमु तत्प्रत्यर्थिवक्षो हरन् ।
ऊर्ध्वं वर्षशता[1]द्यसुं द्विजशिशुं नोज्जीवयामास किं
लोकान्रुद्रहगर्दितान्स्मर यथापूर्वं न वाऽकल्पयत् ॥५१

(IV-43) अघटितघटनाविहारहारी
स्मर हरिरात्मजमप्यनिष्टचर्यम् ।
पशुपतिनिटलाक्षपावकान्तः-
पतितमुपैक्षत पातकिन्भवन्तम् ॥ ५२

(IV-44) मदनमेवं विनिन्द्य तदर्थं मलयगिरितरुभुजगविषदिग्धं मन्दमारुतं जगाद सखेदम् । ५३

(IV-45) स्फुटत्यलं कुवलयं त्रुटत्यपि विधेः पदम् ।
यात्येव भुवनं भङ्गं [2]वात्येवमहह त्वयि ॥ ५४

---

1 द्यनुं 2 घात्वेव

बालपवन लोलनीपवन मयि ततो मा वीजय मा वीजय। ५५

(IV-46) अग्निर्भवांश्च मिलितावखिलं दहेता-
मित्यब्जभूरयनदेव युवां वियोज्य।
दिक्कोणमेकमथाप्यगमो दुरात्म-
न्दग्धुं जगद्यमपदं दहनान्तरज्ञात्॥ ५६

(IV-47) बालासुहारिन्जग्धुं त्वां
कालाहिनितितेर्विधिः।
लीलानिधिश्चिरायुः किं
वेलाधिकरुषाऽकरोत्॥ ५७

(IV-48) बाल्ये जातपलाशिवृत्तिरयि हा बाढं व्यहार्षीः परा-
मक्षीणां सुमनोरमामतनुविस्फूर्तौ तवेतः परम्।
लोको धूलिमयः प्रभञ्जन भवेल्लोकैकरक्षापरो
हन्तुं त्वां न विचक्षणो मुरहरोऽनन्तावतारादृते॥ ५८

(IV-49) कीलालयोनिकीलालिहालाहल[1]सखो जवात्।
लीलावशा[2]न्नुदसि किं बालानिल तवोचितम्॥ ५९

(IV-50) स्फुरत्तमस्स्फूर्तिकुजो बली त्वं
शनैश्चरः पांसुल भीकरश्चेत्।
समीनकेतुस्सहसा हरिष्य-
स्यपि त्रिलोकीमबलासुवातैः॥ ६०

(IV-51) एवं विनिन्द्यानिलमिन्दुशोभा-
प्रवाहमध्ये [3]पतनोद्यता सा।

1 सको 2 न्नुदशखि
3 पदनोद्यता

हा हा बतेत्यालिजनैर्निरुद्धा
[1]शोकाकुलाऽभूच्छुकवाहविद्धा ॥ ६१

(IV-52) तदनु वदनराकातारकानायकाग्रे
निहितमहितचेला [2]निस्त्रपं सा रुरोद ।
किसलमृदुलराजत्किन्न(री)पाणिवीणा-
सरसरवसुधाश्चत्सारपूरानुकारम् ॥ ६२

(IV-53) आश्लिष्य तामाननमुन्नमय्य
बाष्पं विमृज्यालिगणो बभाषे ।
वसुप्रभुस्त्वां वरयेत्सुखश्री-
स्सद्यो भवेत्साहस[3]मद्य मेति ॥ ६३

(IV-54) इत्यालिमाश्वास्य हितेङ्गितज्ञा
सा मञ्जुवाणी न समागतेति ।
सञ्चिन्त्य तत्कालविलम्बखिन्नां
ज्योत्स्नातिनुन्नां जगदुर्हितं ताः ॥ ६४

(IV-55) आश्चर्यदृश्यमनिदानतयाऽथ ताभि-
रर्कोपमानमरुणोपलभासमानम् ।
लाक्षासमानमुदभूल्लसमानसन्ध्या-
लक्ष्मीसखं ललितदिव्यमहस्तदग्रे ॥ ६५

(IV-56) तदनु तामरसलोचनातापयितृतारकाधिनाथनिष्कासनागतलोकबान्धवोदयो, [4]निजकन्यकारात्रिकाकरणाय मातृपाणिरक्तनीरजनीराजनामभेयं, सहजानुरक्तशैलजासंरक्षणोपेतसञ्जीवनौषधदीधितिरसौ,

---

1 शोकाकाला
2 निस्त्रपुंसारुरोद
3 मद्यसेति
4 रजनिजकन्यका

कुमारिकाभावजिज्ञासासमेतकोलाहलाचलरत्नकूटदीप्तिरेषा, दीप्ति-मात्रं न, दिव्यधामजालमिदमिति विकल्पेन परस्परं सकलसखीजनेषु सम्भाषमाणेषु [1]वसुनृपार्चितपारिजातरागमुद्राङ्गुलीयशोभारञ्जिता-त्मीयपाणी समागता मधुपवेणी मञ्जुवाणी । ६६

(IV-57) **वसुराजाङ्गुलीभूषां वयस्याग्रे निधाय सा ।**
**उदन्तं निजमाद्यन्तमूचेऽथ प्रार्थिताऽलिभिः ॥** ६७

(IV-58) **विज्ञाप्य बालाऽतनुवेदनाञ्च**
**विज्ञाय वेगाद्वसुवीरभावम् ।**
**आगम्यतामित्यहमाद्दताऽगा-**
**माकाशदेशोत्पतनातिदाक्ष्यम् ॥** ६८

(IV-59) तदानीमम्बरोत्पतनवेगकौशलेन धरणीतलं तरुनिकरेण समुत्पतित-मिव सन्ददृशे; तदुपरि पवनार्भटीभिस्तत्र तत्र ताडिताम्बरारव इव शुश्रुवे; तदनु सकलभूमिरपि व्यवधानरहिततया तदा कृताभ्याग-मेव व्यलोकि; तदनन्तरं तारकानायकोऽपि संवर्धिततनुरिव रराज राजवदनाः; किञ्च ६९

(IV-59) **गोत्रा हि दृष्टा घुटिका इवाब्ज-**
**मुख्यस्तटाका मुकुरा इवाऽमुः ।**
**हारा इवासन्नवनेस्तटिन्य-**
**स्सस्याङ्कुरालीव समैक्षि वन्या ॥** ७०

(IV-60) **दृष्ट्वा पुरीदुर्गमुखानि भूमौ**
**पुञ्जीकृतानीव [2]पुरी विसञ्चिता ।**

1 वसुनृपार्जित

2 पूर ... सञ्चिता

विशिष्य विज्ञाय विवेकभूम्ना
ततोऽगमं तन्नगराग्रदेशम् ॥ ७१

(IV-61) अथाम्बरतलावरोहसमये नगरलक्ष्मीमकुटनवगन्धफलिकामालिका इव भर्महर्म्यध्वजाः, गृहदेवतामौलिकलितकमलकलिका इव कनककलशाः, वीरलक्ष्मीनिवासविकचवनजदलपरम्परा इव विपुलवप्रशिखाः, वसुमतीसखीमेखला इव वलमानतोरणालिः, अनन्ततनुधरलक्ष्मीरिव खुरलिकानटनवाटिकागजाश्वशालिकागन्धविपणिकामुखार्पितरत्नपाञ्चालिकापालिका च मन्दमन्दं सन्दद्दशिरे मन्दगमनाः । ७२

(IV-62) काश्मीरसारघनसारपटीरनीर-
कस्तूरिकानिकरगन्धभरे समीरे ।
तत्राभिघाति सति मन्दतरं तदानीं
गाढं निरस्त[1]गगनक्रमणश्रमाऽसम् ॥ ७३

(IV-63) छायाऽपरेयमिति शङ्किषु यामिकेषु
पारावतेषु वलभिं परितो भ्रमत्सु ।
[2]केक्यावलीषु सरुतासु च कीर्णपक्षं
तस्यां शिरोगृहतले तदनु स्थितास्मि ॥ ७४

तदानीं, ७५

(IV-64) विध्वातपाङ्गभसिता वृतियन्त्रपीठा
दृङ्मीलनाश्चदराऽञ्जदघज्जलाश्रुः ।
चन्द्रामृतस्रुतिसमन्वितकेतुजिह्वा
शान्तारवा घनसमाधिरिवाऽबभौ सा ॥ ७६

---

1 गगनाक्रमण 2 केकावलीषु

(IV-65) कमनीयतन्नगरे कामुकजनकण्ठतलकलितवेल्लद्भुजेन रतिश्रमापनोदाय राजिताङ्गणराजमानेन, [1]कुपितविटजनकोपशान्तये कुहनाविनयनटनकौशलयुतेन, परयुवतिसङ्केतसदनयायिपल्लवजनमर्मविघटनाय सम्प्राप्त[2]पुरुषभूमिकया सह तदीयमार्गमध्यस्थेन, रहस्यसङ्गतासयुतराजकुमारसमेतसदनेन, (मदन)मन्त्ररहस्यानि सदनवलभिनिभृतपारावतानामुपदिशता नानाविधेन वेश्याजनेन ममाऽजनि गणिकाजनवाटिका नयनानन्दपरिपाटिका; तत्रैव कुत्रचित्प्रदेशे ।

(IV-66) पाण्डिम्ना नु वियोगजेन मिलिता पद्माहितस्यातपा-
श्चन्द्राश्माम्बुझरी किमाप विलयं चञ्चन्मनोजानलात् ।
वीक्षाभा यमुनोर्मिभिर्विघटिता किं रत्नदीपावली
कासाञ्चिद्दलितं (नु) यामिकभयं [3]कञ्जास्त्रराजाज्ञया ॥

(IV-66) ततो हि काश्चिज्जारिण्य-
स्तरसा समयं ययुः ।
निर्भीताश्चन्द्रिकाऽब्जाश्म-
नीररत्नांशुयामिकैः ॥ ७९

(IV-67) सौधास्समस्ता हरिसौधतुल्या-
स्सर्वे ध्वजास्सत्पथलङ्घिशृङ्गाः ।
सौवर्णरूपा सकला गृहाली
सर्वत्र तस्यां कमला समृद्धा ॥ ८०

ततो वसुराजसदनविशेषजिज्ञासा ममाऽस । ८१

(IV-68) यक्षाधीशसुतास्सपुष्करुता यामिन्यधीशानना-
श्चञ्चच्चारणसुन्दरीश्चटुगिरश्चक्षुश्रवःकन्यकाः ।

---

1 कुपितविटजेन कोपशान्तये    2 पुरुषवेषभूमिकया
3 कजास्त्रराजया

पाण्यञ्चन्मणिदीपिकाः प्रविलसद्द्वानाश्च गन्धर्वजा
वीक्ष्याऽथानिशमेकसञ्चपरितस्सञ्चारिणीर्विस्मिता ॥

(IV-69) नरपतिवरलोके नागकान्ताप्रचारः
कथमिति लसदूहा कारणं तत्र मत्वा ।
विबुधरमणदत्तव्योमयानप्रभावं
तदनु वसुमहीराड्द्वारदेशं तमागाम् ॥ ८३

(IV-70) दानागतरसाढ्यालीगानामृतभरादिव ।
नि[1]द्राक्षयानेकपान्द्वार्यद्राक्षमथ चान्तरे ॥ ८४

(IV-71) हीरक्षीरसुधाचितं हरिमणीनीलं हिमांशूपल-
श्रेणीवारि[2]विशोभितं मरकतश्रीगोमयारूषितम् ।
राजद्विद्रुमरञ्जितं सितमणीभूरङ्गवल्लीयुतं
वैडूर्यप्रतिसीरिकाविलसितं माणिक्यदीपाञ्चितम् ॥ ८५

(IV-71) पुष्यरागावलीहेमपुष्करोल्लोचपूरितम् ।
आस्थानमण्टपं चित्रमालोक्यान्तरगां ततः ॥ ८६

(IV-72) तप्तस्वर्णगृहाणि दन्तनिलयांस्तार्क्ष्योपलार्चागृहा-
न्प्राञ्चद्भोजनशालिकाः प्रविलसत्पानीयसौधान्घनान् ।
रत्नाञ्चत्खुरलीस्सुशीतलशिलारम्याम्बुयन्त्रालयान्
राराजद्भुवनेश्वराणि च रयादुल्लङ्घ्य याता भुवम् ॥ ८७

(IV-73) तदनु तत्र कुत्रचिदमलसलिलशङ्कया सङ्कुचद्वसनाञ्चला केवलं शनैश्शनैश्चरणविन्यासमकार्षं; क्वचनसीमनि विघटितोरुकवाटिका गृहवाटिकेति मुदा विनम्रमौलिः प्रवेष्टुमसार्षं; एकत्र वितर्दिकामनीषया वृथा तुङ्गतरपदाग्रा समारुरुक्षुरभूवं; अपरत्र चित्रभित्ति-

1 निद्राक्षपानेकपान्  2 विशोभिनं

रियमिति धिषणया तूष्णीमेव तद्दिदृक्षुरभवं; एवमगारराजकीलित-
नानाविधरत्नराजिविविधरुचिविशेषवैभवातिशयप्रलोभिता कथंकथञ्चि-
द्वसुराजकेलीसदनमित एवेति कृतनिश्चया; तदनु मायावल[1]ति-
रोहिताऽसं सहासम् । ८८

(IV-74) **माणिक्यसौधभुवि मन्मथदेवतास्ता**
**लक्ष्यैकगुम्भितकुचा ललनाः प्रसुप्ताः ।**
**अद्राक्षमम्बुजलता इव निद्रिताब्जाः**
**कान्तैककोकसहिताः कमलालयस्थाः ॥** ८९

(IV-75) अथ मधुरवाणी काचिदुरोजनिहितवल्लकीगुणे मलयपवनवलन(स)-
मुदारवे सति [2]किञ्चिदवनताऽलोला केवलं बहिरेव शनैश्शनै-
रास्फालयति; सुकुमारगात्री काचन सुरभिनासानिलेन सुमताल-
वृन्तसुमासवे निस्सरति सति नेत्रे निमील्याविवेका बहिरेव केवलं
वीजयति; चन्द्रवदना काचन चन्द्रकान्तवेदिकया निजमुखे
शीतले सति विक्लबा पाणितलवीटीदलं बहिःप्रसारयति; कञ्ज-
नयना काचन कर्पूरकलाचिकागन्धकांक्षया मधुकरकुलेषु मधुर-
विरुतेषु विह्वला सती बहिरेवाऽञ्जलिं विस्तारयति; एवं निद्रापार-
वश्येऽपि निजोपचारान्नियतवासनाबलेन कलयन्तीः कान्तामणी-
र्विलोक्य विस्मिताशयाऽसं सविलासं; तदनु ९०

(IV-76-77) **आरामस्थलदर्शनागतदिनं प्रारभ्य राज्ञः कुतो**
**निद्राहारकथाऽपि नेति [3]रमणीयोग्याद्रहस्योक्तितः ।**
**खेदामोदभयादिविस्मययुता खेलागतोदञ्चिता**
**तत्केलीसदनान्तराल[4]मविशं ताम्रोपलालङ्कृतम् ॥**

1 त्सरोहितासं 2 किञ्चिदवनितो
3 रमणीयोग्यारहस्योक्तितः 4 मनिशं

तदनन्तरम् ; ९२

(IV-78) [1]ताम्राश्माङ्घ्रिसमञ्चितं परिलसत्तार्क्ष्याश्म[2]कीरान्वितं
तप्तस्वर्णपटावृतं [3]तरणिसच्छायाम्बरालङ्कृतम् ।
प्राश्वत्सूनवितानगन्धभरितं प्राचीन[4]हाराञ्चितं
पर्यङ्कं [5]समपश्यमद्भुतकरं पाकारिरत्नोन्नतम् ॥ ९३

(IV-79) तदनु तस्मिंस्तथाविधशिखाबन्धगलितकल्हारकलिकासखीभूतजागरारुणकटाक्षं, [6]कर्पूरदीर्घघुटिकाकलितकर्ण[7]भूषाविशेषकान्तिसहायभूतगण्ड[8]पाण्डिमानं, शय्याविवर्तनविलूनहारसूत्रमित्रभूततामरसबिसतन्तुकृतोवीतं, किञ्चिदा(लि)प्तचन्दनान्तरङ्गभूतकेवलसूक्ष्मवाससं, परागमयशय्यानिषण्णैकपार्श्वं, वनरुहवर्तुलोपधाननिहितवदनपद्मं, पल्लवोपबर्हयोजितपादपल्लवं, भावचित्रभासुरचित्रफलकमवलोकयन्तं, नूतनजयन्तं तमद्राक्षं वदनजितसोमं वरगुणग्रामं वचनाभिरामं वसुसार्वभौमम् । ९४

(IV-80) रम्याद्रिजामननरागझरीनिमग्नं
[9]दारान्तरेप्सितरसायनरूषितं वा ।
चेतोऽस्य बोद्धुमिति चन्दनतैलदीप-
च्छायामगामथ शतच्छदपत्रनेत्रयः ॥ ९५

(IV-81) उष्णं निश्वसतीक्षणे [10]मुकुलयत्युच्चैर्धुनोति स्वकं
स्वीयां तां स्मरति स्वयं हसति संस्विद्यत्यभि[11]प्रेक्षते ।

---

1 ताम्रसमांघ्रि — 2 नीरान्वितं
3 तरण — 4 हाराचितं
5 नमपश्य — 6 कपूर
7 भूपा — 8 पाण्डिमाल
9 दाहान्तरेप्सितरसायनरूषितं वा । — 10 मुकुलयत्युछेर्धिनोलिस्मकं
11 प्रेक्षिते

उत्तिष्ठत्यधिपो लुठत्यपि [1]चलत्युद्रौ(ति) निष्कम्पते
कान्ते हा सुमुखीति सूनशयने कामार्दितो लम्बते ॥

(IV-82) बालामवेक्ष्य तां चित्ते लोलाकुलमना विभुः ।
वेलातिलङ्घिमोहेन [2]लीलाविरहितोऽवदत् ॥ ९७

(IV-83) कोपः किमर्थमलिवेणि कुतो नु मौनं
कस्मान्मनस्तव शिलाकठिनं वराङ्गि ।
कञ्जाक्षि हन्त कलयाशु दृढोपगूहं
कान्ते कदाऽपि न मया कलितोऽपराधः ॥ ९८

(IV-84) सारङ्गाक्रमणच्छलेन सविधे सत्यां च हंसागतौ
सख्याह्वानमिषेण [3]सत्फलहृतिव्याजेन कीरावलेः ।
साचीकृत्य मुखं [4]तदेक्षि तरलसंरक्षितोस्मीत्यहं
सन्तुष्टोऽभवमङ्गजार्पणमिदं सर्वात्मनाऽशङ्कितम् ॥ ९९

(IV-85) गुरोर्गुणोऽस्तु कुचयोर्गोत्रजे हृदि मा तव ।
अलके मातृकौटिल्यमहं वृत्तौ न सिन्धुजे ॥ १००

अथ वा, १०१

(IV-86) बाला नीलशिला दृशौ स्मरशरौ [5]वज्रं ददोघोऽधरो
रत्नं हेमघटान्कुचावसिरमा रोमावली शैलजे ।
कट्यौ चक्रयुगं [6]घनद्विपकरा(नू)रू पदे कच्छपौ
कामाञ्चन्मणिपुलि ते [7]यदजयन्काठिन्यमहं ततः ॥

1 चलत्युद्रौ निष्कम्पते
2 लालाविरहितोऽवदत्
3 सत्फलद्हतिव्याजे
4 तदक्षिततरसंरक्षितोस्मीत्यहं
5 वज्रांतदौघो
6 वैजकरान्...रू
7 यदजयन् नालिन्य

(IV-87) इति कथयति तस्मिन्निन्दुवक्त्रास्तदानी-
ममृतजलधिमग्नेवाहमानन्दपूर्णा ।
नयनविषयनानापुण्यपालीफलेव
प्रथित[1]सकललोकैकाधिपत्येव चाऽसम् ॥ १०३

(IV-88) पुनरतिपरुषोक्तेस्तस्यपुष्पास्त्रमूर्तेः
प्रकटितगिरिजाधेः प्रापयिष्यामि मोदम् ।
परममिति नृपाञ्चन्मञ्चपाञ्चालिकालौ
मणिगणमयपुत्री मञ्जुलाऽसं तथैका ॥ १०४

(IV-89) कामं तत्र विहस्य भूपमवदं कान्तान्वरिष्यन्ति किं
कामिन्यः स्वयमेव तेन कलिता काऽनौचितियौषिताम् ।
कञ्जाक्षीं स्मरबाणसात्कलयतां कारुण्यहीनात्मनां
कामार्तां समुपेक्षतां वसुमहीकान्ताऽनयः केवलम् ॥

(IV-90) मायाजालमयाश्चलाचलहृदो मन्दाक्षशून्या दया-
हीना गर्वयुताः स्वकार्यनिरता वामाश्शठा वञ्चकाः ।
नानोपायपरा नरा ननु धरानाथा यदि श्रीमहा-
योगान्धा बहुलोक्तिभिः किमिह हा विश्वासयोग्या न हि ॥

(IV-91) इतीरणं भूपतिरित्थचित्रं
निशम्य शय्यानिकटे मदीयम् ।
प्रियानुतापानलपीडितोऽभू-
च्चिन्ताब्धिमग्नश्चिरमङ्गजार्तः ॥ १०७

तदनु, १०८

---

1. सकललोकादाधित्यैवचासम् ।

(IV-92) किं चारणेन्दुवदना किमु लेखकन्या
किं किन्नरी किमहिजा गिरिजा[1]सखी वा ।
कामातुरस्य मम काचन मञ्जुवाणी
वामालकाधिमधिवक्तुमिहागता किम् ॥ १०९

(IV-93) एवं स मत्वाऽवददिष्टभामा-
मनोऽनुरक्तं हि मयीति सूक्तयाम् ।
पूर्णं सुखं पुण्यफलञ्च कामो
वामो जितो मे वनितार्तिखेदः ॥ ११०

(IV-94) मच्चेतसि स्थितिवशात्किमु मानसे स्वे
मद्धारणान्नु मदभेदधियान्नु कान्ता ।
तान्ता नितान्तमहमेव तदाधिहेतुः
प्रायोऽभवं शिवशिवेति पपात तल्पे ॥ १११

(IV-95) मुह्यतोऽथ विभोः कण्ठे मुक्ताहारे मयाऽर्पिते ।
स फुल्लनयनाब्जस्सन्समीक्ष्य तमशङ्कयत् ॥ ११२

(IV-96) हारोऽयमद्भुततरः कथमागतो वा
[2]कस्याः कुचाचलगतो नु कयार्पितो वा ।
अस्मिन्वपुः स्पृशति [3]सत्यहहाधुना मे
तादृङ्न तद्विरहतापजनिः क एषः ॥ ११३

(IV-97) प्रागेकदा कचन दृष्ट इव प्र(भाति)
हारोऽयमञ्चिततरो हसितेन्दुतारः ।
भूमीभृदात्मभुव एव हि चित्रकन्या-
हाराविशेषगुणहारितयाऽधिहारी ॥ ११४

1. सखीनां 2 कस: 3. सत्यमहाधुना

(IV-98) इति विसु(रतिमो)दादीरय(न्) हार(व)यं
सतततदनुरागात्साश्रुधाराश्रमोदः ।
मकुटनिटलगण्डश्रोत्रदृक्कण्ठबाहा-
हृदयभुवि बभाराऽहा वियुक्तोऽनुवारम् ॥ ११५

(IV-100) ताराहारतुषारगौर गिरिजाहाराधिराजाऽधुना
क्षेमं किं युवतेस्तदालिविततेश्रीमङ्गलं किन्नु वा ।
भद्रं किं तदगारमञ्जुवयसां हृद्रञ्जयोक्त्याऽशु मे
कान्ताख्यातिसरं हृदीहकलयंस्त्वां तापहं प्रार्थये ॥

(IV-101) भाग्याक्षरावलिरुतामृतभव्यधारा
किं त्वं मदीयसुकृतागमकोरकाली ।
हाराधिराज तदुरोजधराविहार
त्वां वर्णयान्यतनुतापहरं कथं वा ॥ ११७

(IV-102) सुन्दर्युरोजतटवाससुखं च हित्वा
हारागतो मदवनाय गुणो नु वर्ण्यः ।
शौर्यवृत्तगुणिनश्चिरमार्तरक्षा-
गाढत्वरा निजसुखं गणयन्ति किं वा ॥ ११८

(IV-103) पुरा मणीसद्मनि पुष्कराक्ष्या-
स्त्रपाभरात्त्वत्प्रतिबिम्बितं माम् ।
वीक्ष्य स्थिताया विदितो हि भावो
हार त्वया हर्षय तद्गिरा माम् ॥ ११९

(IV-104) भाविकान्ताकुचाश्लेषभावुके करलालनैः ।
[1]श्रीमन्तं कलयानि त्वां शीर्णं न रचयान्यये ॥ १२०

1 श्रीचन्द्रकलयानि

(IV-105) शुक्त्युद्गृहाधिगत सूचिशिखोत्थ मुक्ता-
हारागमो हरिणदृक्कुचवासभाग्यम् ।
मान्यानुभाव दययैव ममापि मुक्ता-
हारस्य तद्घटय हारकुलावतंस ॥ १२१

(IV-106) आबाल्यमद्रितनयामणियोजितस्त्वं
गण्योऽसि सम्प्रति गुणोन्नत तन्यथार्तः ।
त्वां मामकश्रमजलार्द्रतदङ्गगन्ध-
सारैः कदा विरचयानि ससत्प्रकाशम् ॥ १२२

(IV-107) उक्त्वैवं मणिहारमेवमधिभूरूचे मणीपुत्रिकां
सम्पूर्णाप्रतिमोपकारसुकृने सर्वोत्तमे सद्ये ।
पाञ्चालीकुहनां निरस्य कथय प्रत्यक्षभूताऽधुना
कान्तावल्लभजीवितं प्रियसखीकण्ठोक्त्यधीनं न किम् ॥

(IV-108) तद्वाक्या(नि) निशम्य तादृशशिलाऽहल्येव कान्ताकृति-
स्तं नत्वेत्यवदं त्वदीयवचनं सत्यं तदाधिं तव ।
वक्तुं भूवर मञ्जुवाण्यहमिहायातास्म्यनङ्गातुरा
भूपा विस्मृतिशालिनोऽपि भुवने (नालोकसे ता)दृशीम् ॥

(IV-109) कान्ताकठोरवचनं कथये महीन्द्र
तच्छ्रूयतां [1]त्वदचलेन्द्रजयस्तुतौ सा ।
निश्वस्य सोष्णमचलाः कठिना जिताद्रिः
[2]कस्मादद्रवेत्सुकरमित्यभवत्सबाष्पा ॥ १२५

(IV-110) [3]विश्वार्घकान्तिभरतां व्रतपुण्यभोग-
हेतुत्वमेतदितराधिनिदानताञ्च ।

1 त्व वचनेन्द्र 2 कस्माद्रवतसु 3 निश्वार्घ

[1]वेधो विचिन्त्य विशदं वसुनाम तस्य
चक्रे [2]किमित्यजनि चन्द्रमुखी समोहा ॥ १२६

(IV-111) तदनु वियुक्तनालीकायामक्षिसंज्ञावशायामिन्दिरायामये तेन तृणीकृतायां, कूर्मासनाभ्यासनियमाश्रितायां (भजन्त्यां धरित्र्यां लघूकृतायां), भव्याधरस्पन्दविधिवशंवदायां भाषायामपि द्विवारमसम्भाषितायां, करस्पर्शनाधीनयशःकान्तायामपि दिक्कोणनिहितायां, जगति [3]बहुवल्लभवतीनामेतादृशी (गतिः) मादृशापूर्णनियमानां [4]का वा प्रत्याशेति चिन्तयन्ती बभूव नम्रवदना नलिनवदना । १२७

(IV-112) मयैवमुक्तस्स महान्जगाद
सत्सू[5]क्तिहृष्टस्तरुणस्मितस्सन् ।
रम्योत्तरं रागभरं रसार्द्रं
कृपादृराढ्यं किलिकिञ्चिताञ्चत् ॥ १२८

(IV-113) कान्तावयस्ये कठिना हि शैला-
स्ततोऽपि तद्गर्वहराः कठोराः ।
ततोऽपि तद्धैर्यहरा इशैव
कामं जगत्यां कठिना न किं वा ॥ १२९

(IV-114) काञ्जानने वसुवरः कलयन्महाशां
तूर्णं गुणेन तुदतीति वचः किमर्थम् ।
शोभाभिराम(म)णिशुक्तिमतीजलक्ष्म्या
[6]मोहाश्रये विरचिते सति मोहदेऽस्मिन् ॥ १३०

1. वेधाद्विचिन्त्य
2. किमित्यपिनि चन्द्रमुखी सदूहा
3. बहुवल्लभावती तादृशी
4. कावप्रत्युशेति
5. नत्सुक्तिदृष्ट.
6. मोहाश्रयो

(IV-115) श्री वाङ्महीमुख्यसितांशुवक्त्रा-
स्वाशा कथं स्यादतथाविधासु ।
[1]अपेक्षिणो नित्यगुणार्यलक्ष्मी-
मवक्रवृत्तां सदखण्डरूपाम् ॥ १३१

(IV-116) इति निशम्य तमेवमवादिषं
चतुरता चतुरास्य न किं गिराम् ।
विरहदुःखमसह्यमतस्सखी-
मवसि किं ननु नाऽवसि किं वद ॥ १३२

(IV-117) इति स निगदितो मामेवमूचेऽनुराग-
[2]प्रसरणमयमोहो गौरदेहोऽप्यलक्षि ।
सरसिजनयने ते संशयोक्त्याऽनया स्या-
त्परमघममेषोः पादपद्मे शपामि ॥ १३३

(IV-118) गोलजा गुर्वधीनेति संशये ( तन्मनोगतिम् )
वेदनाब्धिविमग्नस्य ममाजनि महान्प्लवः ॥ १३४

(IV-119) ह्यस्सायमेव हितमिन्द्रभुजिष्ययोक्तं
मत्वा मदाधिमखिलं मघवा मदर्थम् ।
प्रष्टुं नगेन्द्रतनयां परमर्षिसङ्घै-
र्युक्तो मुदा [3]शिखरिराजमुपेष्यतीति ॥ १३५

(IV-120) सारार्थतत्सूक्तिसुधाधाराभिरसुमानहम् ।
शूरातनुमहाघोरनाराचपरिपीडितः ॥ १३६

1. अपेक्षिती 2. स्सरणमम
3. शिखिनिराज

(IV-121) एनां शुभां गिरमुदीर्य हितासुमाशु
[1]मारास्त्रदातमभिपोषय मञ्जुवाणि ।
इत्युक्तिपूर्वकमिदं दिशताऽङ्गुलीयं
[2]सम्प्रेषिता क्षितिभृता सहसाऽगताऽस्मि ॥ १३७

(IV-122) [3]इत्याद्युदीर्य हितयार्पितमङ्गुलीय-
मादाय बालहरिदश्वसमेन तेन ।
वामालकाप्रसृतिदग्वनजस्तनाश्च-
त्कोकानशोभयदलं कुलशैलकन्या ॥ १३८

तदनु, १३९

(IV-123) तन्नाथनामाक्षरदर्शनेन
तन्वी सलज्जाऽस [4]तदीक्षयेव ।
तदङ्गुलीयोजनया तदीय-
पाणिग्रहेणेव परं प्रहृष्टा ॥ १४०

(IV-124) इमं श्रुत्वाऽथ वृत्तान्तमिन्द्रागतिमपि प्रगे ।
माताऽभवन्महाभङ्गगौरवाऽभ्रंलिहो गुरुः ॥ १४१

तदानीं, १४२

(IV-125) अम्भोजपाणिहृदयाम्बुजखेदनोद-
कार्यागतार्यवसुराजकरोर्मिकां ताम् ।
वीक्ष्यातिभीतिविकलस्य विधोरधावि
तारावलेन किमु तादृश[5]चन्द्रिकाभिः ॥ १४३

---

1. मारास्त्रदानमभि
2. सम्प्रेक्षता
3. इत्युदीर्य हितया प्रयुताङ्गुलीय
4. न दीक्षयेव
5. चन्द्रिकेण

(IV-126) इन्द्रोऽपि मामकरवेरि(त)कालभेद-
शशाः कदाचिद्दषिणाऽनुपमो रवो नः ।
कालत्रयादिमगुनित्रयसूचकेड्य-
भूमेति ताम्रशिरसो व्यरसन्निभङ्ग्या ॥ १४४

(IV-127) काचित्तदा कञ्जमुखी तामुवाच तलोदरीम् ।
विभातविकचाम्भोजमरन्दमधुरोक्तिभिः ॥ १४५

(IV-128) कुवलयकुलबन्धौ कौमुदीगन्धसारे
सरति सति निशास्त्री[1]सङ्गमच्छिन्न(हारे) ।
मणिगण इव वेलादूतिकापुञ्जितोसा-
वुषसि लसति शुक्रः पुष्करोद्धासितल्पात् ॥ १४६

(IV-129) [2]सख्यं हि दूरतरमेव सदोत्पलिन्या
स्नेहो [3]निशावनितया श्रितपूर्वपक्षः ।
तारारुचिश्च न मयेति तदिन्द्विपाये
ज्योत्स्नाऽग्निमाविशति दीपशितांशुदम्भात् ॥ १४७

(IV-130) प्रातर्हली द्युपदजाङ्गलल्नुनुन्न-
ज्योत्स्नाम्बु[4]गुम्भरुहसस्यविभाफलालिः ।
प्राक्प्राण्डिमप्रहितदूरपलालराशिं
[5]निस्सारमिन्दुमवलोकय नीरजाक्षि ॥ १४८

(IV-131) लक्ष्म्यां सरोजगृहभाजि लसद्द्विजोक्ति-
पुण्याहवाचनपुरस्सरमम्बु हैमम् ।
क्लृप्तागमेषु किसलाग्रकरैः किरत्सु
चक्रद्वयं द्विजतयाऽग्रतले चकास्ति ॥ १४९

1 सङ्गमचिन्न. 2 सव्यहि 3 निशाननेतश्रित
4 गुंमदुह 5 निस्मारमिन्दु

(IV-132) कन्दर्पलुब्धवरकल्पितदीपकाञ्च-
त्कोकीकृतश्रुतिकुशेशयसद्मभाजः ।
कोकस्य [1]तत्परवशस्य किमारवैस्तै-
र्नीडान्जहौ खगकुलं नितरां सरावम् ॥ १५०

(IV-133) पञ्चेषुणान्त्यपटुबाणजिताऽखिलेन
वल्गन्मरुत्कृतमहासुम[2]वर्षकेण ।
सम्मुद्रिताग्र[3]शरवत्सखि सामिनिर्य-
दल्यन्विताग्रमसितोत्पलमद्य भाति ॥ १५१

(IV-134) प्रायस्तमीनिभृतसत्त्वपतङ्गपत्नी-
कोशाण्डषण्डकुहरात्[4]प्रसवाप्तिकाले ।

मन्दं विनिस्सरति हा मधुपार्भकाली
पान्थाधिकृत्प्रचुरहेतुगुणाऽतिनीला ॥ १५२

(IV-135) [5]प्रातर्मुनिः प्रकटबोधगुणः स्मरन्सन्
दिक्स्त्रीसुतं सकलदेवमयं दिनेशम् ।
चक्रप्रियं चटुलसान्ध्यमहश्चयाग्नौ
नक्षत्रलाजचरुभिर्ननु [6]सञ्जुहोति ॥ १५३

(IV-136) [7]कालाच्युतो पिहितकञ्जगृहां प्रियां स्वां
लक्ष्मीं समीक्ष्य कुमुदालयविभ्रमेष्याम् ।
वामं निमील्य नयनं वरमक्षि सव्य-
[8]मुन्मीलयत्यचलदिन्दुरुदेति भानुः ॥ १५४

---

1. ततरवशस्य 2. वर्षकाद 3. शरपत्सखि
4. त्प्रसवापिकाले 5. प्रातर्हनिः 6. सञ्युहोति ।
7. कालाच्युते 8. मुन्नीलत्सचलदिन्दु

(IV-137) सम्प्रार्थ्य तातमचलं [1]सखि तद्विभोस्त्वां
संयोक्तुमद्य निजसद्मविनिर्गतस्य ।
अर्कस्सुहृत्सुरपतेररुणातपत्रं
[2]रश्मिप्रभा हि तदधो घनरत्नगुच्छाः ॥ १५५

(IV-138) इत्याप्तसख्या हितपूर्वमुक्ता
प्रसन्नवक्त्राम्बुरुहा प्रहृष्टा ।
मुक्ताधिरञ्चन्मुखमञ्जनाभि-
र्गोत्रात्मजाता गुरुपार्श्वगाऽभूत् ॥ १५६

(कामाक्षि देवि करुणामयि कामकोटि
काञ्चीपुरीश्वरि कदम्बवनीनिवासे ।
कान्तैकचूतपतिना कलितावधाना
कर्णामृतं कलय काव्यमिदं मदीयम् ॥ ) १५७

इति श्रीकामाक्षीदासकालहस्तिकविकृतौ

वसुचरित्रे चम्पूकाव्ये

चतुर्थ आश्वासः

---

1 सहि   2 रश्मिप्रजाहितवितदधौ

# कालहस्तिकविविरचितं

# वसुचरित्रम्

## पञ्चमाश्वासः

( कामाक्षि देवि करुणामयि कामकोटि
काञ्चीपुरीश्वरि कदम्बवनीनिवासे ।
कान्तैकचूतपतिना कलितावधाना
कर्णामृतं कलय काव्यमिदं मदीयम् ॥ ) १

( V - 2 ) कोलाहलाद्रिरथ तां कुमारीमुपलालयन् ।
कुतूहलाब्धिमग्नस्सन् कु(लशै)ल[1]सुतोऽवसत् ॥ २

( V - 3 ) सौरभ्यमास सुरपादपसूनदाम्नां
पूर्वं ततो विबुधदुन्दुभिपूर्णघोषः ।
वीणारवोऽथ मधुरो विबुधावलीनां
दिग्भासकं तदनु दिव्यमहो महीयः ॥ ३

( V - 3 ) वियत्यथ विमानानि दिक्पाला देवयोषितः ।
विविधा [2]मुनिवर्याश्च विशिष्य परिवीक्षिताः ॥ ४

( V - 4 ) हरिमुखहरिदधिपतयो हरिगजनानाविमानहरिहरिणाक्ष्यः ।
हरिवदनाश्च तदानीं हरिपदमतिचक्रुरम्बरं चित्रम् ॥ ५

तदनु, ६

1. सुतोवसन्  2. मूनिवीराश्च

(V - 5) प्रबला गिरीशमौलिं प्रापेत्ययशः प्रमार्ष्टुकामेव ।
अबला गिरीशमागाद्गङ्गा पद्माङ्घ्रिसङ्गिभृङ्गाक्षी ॥ ७

तदनन्तरं, ८

(V - 6) शक्रावोऽधपुलायितप्रकटनोत्साहीव सौरो गजो
हस्ताधूतपतद्बलाहकघटाघातक्रियावानिव ।
देव्योऽङ्गुष्ठशिरोऽनुषङ्गनटनोल्लासा इवारेचका-
भ्यासज्ञापनका इवाऽवरुरुहुस्सप्तर्षयश्चाम्बरात् ॥ ९

(V - 6) लेखाधिपमुखापाङ्ग(वीक्षा)गुणयुतेव सा ।
रथाल्यवरुरोहैतान्यथाऽपश्यन्जना दिवि ॥ १०

(V - 7) रथगजहयदेवान् रत्नबिम्बापदेशा-
[1]त्सममवहत शैलस्साध्वसं नाप तस्मात् ।
वसुविभुनखवल्गद्वज्रधारासहस्य
प्रभवति [2]किमु भीतिः प्राप्तवज्रान्महेन्द्रात् ॥ ११

(V - 8) देवागमाविलमृगोद्धतधातुरेणु-
रभ्रंलिहश्शिखररत्नविभान्विताऽसीत् ।
सङ्क्रन्दनस्य शुभकार्यसमागतस्य
चापोपदाभृदवनीभृदिवाभियायी ॥ १२

(V - 9) पर्जन्यागमनाच्छशाम [3]सरसात्कान्तारघोरानल-
स्सन्नूनं शतकोटिदीपितकरालोकाद्गुहालीतमः ।
सामीप्ये(ऽथ) जगन्नियामकविभोस्सत्वादिवैरं गतं
[4]सर्वत्वर्चितसन्निधेः खगकुले सङ्केतमुद्रा गता ॥ १३

1 स्तममवह्नत 2 किमूमीतिप्राप्तवज्रान्यहेन्द्रात्
3 परमा 4 सर्वत्राश्रितसन्निधेः जगकुले सङ्केतमुद्रा नता

(V-9) चराचरजगद्वन्द्यचरणाब्जघनागमात् ।
[1]फलपुष्पभरा ह्यद्रौ भव्या वल्लीमहीरुहाः ॥ १४

(V-10) आकल्पयन्नतज्झराम्बुभिरर्घ्यपाद्ये
कल्पद्रुसूनिवहैः [2]कलयन्नथार्चाम् ।
कुर्वन्स्वकूटमणिभिः कुतुकोपहारं
कोलाहलाद्रिरनमत्कुलिशायुधाय ॥ १५

(V-11) अथाऽग्निमुख्यानमरा-
न्सप्तर्षीन्स[3]त्पथापगाम् ।
[4]गीर्वाणीश्च गिरीन्द्रोऽसौ
सम्भाव्य समतोषयत् ॥ १६

(V-12) कुलदैव(त)मस्मदीयमेषा
कुलभूषाकुलभाग्यमेवमादि ।
कुलशैलसुतो वदन्कुमारीं
नमयामास नतादरामरेभ्यः ॥ १७

(V-13) गुर्वाज्ञयाऽनतां पश्यद्दोलाहितदिवौकसाम् ।
[5]दृग्बहुत्वानिमेषत्वे दृढं प्राप्ते कृतार्थताम् ॥ १८

(V-14) अथ तदानीमचलाधिराजकुमारिकारूपदर्शनजनितलज्जया रम्भाया-मानतशिखायां, हरिण्यभिधायामतिचलेक्षणायां, शशिरेखायां कृशीभूतशरीरायां, तारायां तथा पाण्डरायां, मदालसायां मन्दीभूतोचितकार्यविवेकायां, मञ्जुघोषायां मदोद्धतिरहितभाषायां, वरूनिधीसंज्ञायां विस्मृतवपुःक्रियायां, चित्ररेखायां चेष्टारहितायां,

1. फलपुष्पभरासाद्रौभव्यावल्लीमहीरुहाम् ॥
2. कलयन्नथार्हम् 3. सत्वथापगाम् 4. निर्वाणिश्च
5. दिग्बहुत्व

सानुमत्यां शिलाकृत्यां, तपनीयाभिधायां तापद्रवीभूतायां च सत्यां-
(V-15) महीधरसुतामालिङ्ग्य मस्तकं समाघ्राय महेशमौलिमणिमण्डनायित-
महानदी शुचिवृत्तिशीतला समोदा जगाद । १९

मान्या सुजाता माता ते महिता सिन्धुमण्डले ।
महीधरोऽपि जनको महनीयतरोऽद्रिषु ॥ २०

(V-16) नाथं पदाम्भोजनताचलेशं
सम्प्राप्तकल्याणसमाख्यमार्ये ।
उद्वाह्य सन्मार्गमुमाधिकैकी-
भावतिमोदं भज [1]हर्यधीना ॥ २१

(V-17) इति गङ्गागिरा भूभृदतिमोदयुतो मुहुः ।
नतिमारचयन्देवपतिमाह कृताञ्जलिः ॥ २२

(V-18) वाहो घनस्तव वदान्यमणिर्विभूषा
कल्पा वनानि पशुसद्मनि कामधेनुः ।
तत्तेऽर्घ्यरत्नरचिताञ्जलिस्नरम्य-
वस्त्वर्पणं विनतवत्सल वाञ्छयैव ॥ २३

(V-19) मत्वा मां मुनिमेव योगमनसा मान्यापगागाहिनं
सागाश्वद्रसुराजपादसहनात्सन्तापबर्हिर्वृतम् ।
पक्षापायवशेन निश्चलतरं पर्यस्तबन्ध्वाशया-
त्पाकारे गिरिकाननादरपरं पातु त्वमत्रागतः ॥

विगतीनां विबुध एव गतिरिति वचो मयि विशिष्य दृष्टम्; २५

(V-20) वसुराण्ण(ख)वज्रलूनपक्षे
मयि खञ्जे महिताभ्रसिन्धुपातात् ।

---

1. हार्यधीना

सुकृती सुतरां सुराग्रणीस्ते
कृपया शैलकुलोन्नतोऽस्मि [1]चाद्य ॥ २६

(V-21) इतीरितस्सन्गिरिमित्यवादी-
दिन्द्रो [2]गिरे वक्तुमिदं न तेऽर्हम् ।
मखांशभाङ्मान्यमहीध्रसू(नो-
र)न्ययशोगौरवमद्भुतं किम् ॥ २७

श्रूयतामिदं मेनाशुक्तिमुक्तामणे, २८

(V-22) वस्वङ्किवज्राग्रिहरां तनूजा-
मुमारमावागुपमामिमां त्वम् ।
शर्वाच्युतब्रह्मसदृग्वराय
दत्त्वा [3]सुखास्वादयिताऽस्मदुक्त्या ॥ २९

(V-23) अगतनयमानित(वर न)गतनय त्वत्कुमारिकायोग्यम् ।
वरमालपामि शोभाकरमात्मीयं सुमितमुर्वीशम् ॥ ३०

भागीरथीवचनं भवेदपार्थं किम् , ३१

(V-24) सम्यक्पादनताचलेशमतुलं सन्मार्गसञ्चारिणं
सत्कल्याणसमाख्यमञ्चितदयासारं वसुक्ष्मापतिम् ।
जामातृत्वयुतं विधाय जगतीप्रख्यातकीर्तिं सदा
नव्यामोदभरो भवाचलमणे नानाविधैश्वर्यभाक् ॥

(V-25) धन्यो महान्धर्ममयस्त्वमेव
सर्वाभिनन्द्यो वसुसार्वभौमः ।

1 चापरा 2 निले
3 सुखीस्वादयिता

जामातृभावेन जवेन सोऽपि
भविष्यति त्वत्पदभक्तिनम्रः ॥ ३३

(V-26) इतीरितस्सन्निगिरिरित्यभाणी-
दिन्द्राधिसिन्धोरियमात्मजा नौः ।
वसुक्ष्माभृद्वरयोगतोऽस्या-
स्तोषं चिरं पोषय शोषयाधिम् ॥ ३४

(V-27) प्रत्यक्षे देवमालेऽपि प्राहुः श्रीवृद्धिमुत्तमाः ।
प्रसन्ने त्वयि देवौघैः प्रायः किन्नेष्टसिद्धयः ॥ ३५

(V-28) प्रश्नप्रयोजकघनो वसुपार्थिवेन्द्रः
प्रष्टा चिरं सुरपतिस्तनया प्रदानम् ।
सर्वामराधिकहितं यदि सम्यगस्मा-
त्कन्यावतः किमपरं कमनीयभाग्यम् ॥ ३६

(V-29) अयं जनः प्रार्थयितुं किमन्यो
मदीयभाग्यं मघवंस्त्वदीयम् ।
शुभानुमत्या सह शुक्तिमत्या
समर्पयाप्ताय सुतां [1]सहाप्तैः ॥ ३७

(V-30) तत्पार्श्वगाऽथ तनया निजतातवाक्यं
श्रुत्वा नखेन लिलिखे करशोभिपद्मम् ।
वज्रोपमं रतिवरास्त्रमितः परं मे
नानाविधं खनखनाध्यमितीव मान्ती ॥ ३८

(V-31) तत्पूर्वमेव तमुदन्तमथालिवर्गै-
श्श्रुत्वा समीपभुवि शुक्तिमतीस्रवन्ती ।

---

1. महाप्तैः

पुण्यापगा घनपुरन्ध्रियुता प्रणन्तु-
मागात्सुरेन्द्रममराद्भुतहेतुभूतिः ॥ ३९

(V - 32) अथ तदानीममृतमूर्तिवैभवा हरजटासम्भवा, सुमनोमनोविकास-कारिका सोमकुमारिका, भूतलोद्धारिका भूदारकन्यका, तमोवारयित्री तामरसबन्धुपुत्री, कालवैषम्यहारिणी कालरुद्राङ्घ्रिसारिणी, महित-शैतल्यभूर्मलयशैलभूः, अभवहेतुभूता पिनाकात्मजाता, शिवाऽति-विनया शीताद्रितनया च परा पुण्यनदीपरम्परा निलिम्पा-धिप(निदेशाप)देशेन शुक्तिमतीसुताविवाहमहोत्सवाय समागता ।
४०

(V - 33) सिन्धुष्वेवं समेतासु शृङ्गाढ्या गिरयो ऽभ्ययुः ।
[1]वृषोपसर्पणार्हाञ्चन्नितम्बा गोगणा इव ॥ ४१

(V - 34) अज्ञातगोत्राऽनादिशक्तिरपि विज्ञातगोत्रसम्भवाऽसीदेतद्धर्मसञ्जननेन, आदिभिक्षुरपि दुर्गाध्यक्षोऽभवदेतदीयपादतीर्थ[2]शिरोऽपवाहेन, मित-तेजा मिहिरोऽपि समुल्बणवसुस्थितिं प्रापदेतदीयदिक्प्रापणेन, कुलाचलकुलानि च कोमलगोरत्नसन्ततिं प्रापुरेतदीयशेषस्वीकारेण, सकलसुमनसोऽप्यमुष्यैकयागांशसमर्पणेन सन्ततसमस्तयागभाग-भोजिनो बभूवुरयमपर्णैकगुरुरिति सकलदेवतागीयमानो हिमाद्रि-

(V - 35) राजगाम भव्यगुणविस्मितलसदमरालीमानसमरालीभूतपौत्रीविवाह-सम्भ्रमविलोकनाय मेनाकुटुम्बकरावलम्बो मणिनितम्बः । ४२

(V - 36) वज्रस्तम्भकवार्धिरूषितवरौषध्याद्रिवर्ष्मेव वा-
राशिप्रौढतरङ्गपाटिततटीरम्य[3]द्रुमश्रीरिव ।
वार्धिव्यालभयार्थगारुडमणीवर्मेव भर्मान्यभाः
मैनाको जलराशिशैवलमिलद्वालस्तदैवाययौ ॥ ४३

1. वृषोपसर्पणाहि अञ्चन्नितम्बा 2. शिरोपवासेन
3. द्रुवश्रीदिव

तत्क्षण एव, ४४

(V - 37) देवसम्भरणौ शोभादीप्तावब्जधरोद्धृतौ ।
महानन्तगुणौ मेरुमन्दरौ सममागतौ ॥ ४५

(V - 38) आगत्य रोहणगिरिर्मरुदद्रिपार्श्व-
वर्ती रराज वसुराजविवाहकर्ता ।
शक्रेण शैलदुहितुः कृतशुल्कहेम-
रत्नप्रकर्षघनराशिरिवाखिलेड्यः ॥ ४६

(V - 39) अथागतास्सर्वकुलाचलेन्द्रा-
स्तद्धारतान्तावनिधारणोत्काः ।
शेषः स्थितो न श्रितवान्सभां तां
विस्रम्भचारो न हि शेषवृत्तिः ॥ ४७

(V - 40) वर्धयन्करुणावृष्ट्या वाहिनीवरवर्णिनीः ।
महोन्नतांश्चिरं कुर्वन्महीधरवरांस्तवैः ॥ ४८

(V - 40) तत्राद्रिजातवासार्थं वृत्रारिरथ सादरम् ।
चिरमेकमना रम्यं पुरमेकमचिन्तयत् ॥ ४९

(V-41) प्राकाराः कटकाः प्रपातगझरी खेयं गुहास्सद्गृहा-
स्सोपानानि शिलाभिधाश्शशिशिलाश्शृङ्गाणि सौधा गिरेः ।
भद्रश्रीशशिभृत्तटा विपणयो [1]भव्यालता योषितो
वृक्षौघास्तरुणा बभूवुरुचिता वृत्रारिवाञ्छाभरात् ॥ ५०

( V-42 ) शीर्यद्धातुरजांसि दन्तसुषमां [2]श्रीचामरालङ्कृतिं
सान्द्रोज्जृम्भिमदं कदल्यतिशयं सत्वोल्लसत्पुष्करम् ।

1. मव्या 2. श्रीचारुतालङ्कृतिं

प्रायोमञ्जुलकर्बुराकृतिमपि प्राप्याऽथ गण्डोपला
स्फीता भासुरभद्रभावमहिता जाता गिरौ तादृशाः ॥ ५१

( V-43 ) राजाश्रयानिलरयाधिकयानतार्थं
जातैस्तपः किमचलेऽरचयन्कुरङ्गाः ।
ते शृङ्गभाररहिता मुखकान्तताप्त्या
सर्वेऽभवन्सपदि शक्रधिया तुरङ्गाः ॥ ५२

(V - 44) हर्यधीनगतयोऽशनिस्वना
रत्नचापशरराजिता घनाः ।
राजहंसकविनोदका रथा-
श्चञ्चलांशुनिचयाश्चकासिरे ॥ ५३

(V - 45) [1]वन्येभवृत्या वसतेर्गुहासु
सिंहा नृसिंहा वरपौरुषेण ।
पूर्णा जयन्ति स्म पुरा नृसिंहं
शत्रोः परास्यं सटिलं स्वभक्तं ॥ ५४

(V - 46) वप्रा [2]विप्रवरास्पदानि गणिकाः कल्याणकूटा महा-
भूदारा हरिखड्गिकञ्चुकिवरा [3]भूभृद्वरे यूथपाः ।
श्यामाली सरसीश्वराश्च विटपा सद्वंशिनीनिस्वना
योग्या स्वर्थयुता वसुर्हरिकृपा(दृष्टे)[4]रहो तत्क्षणे ॥

(V - 47) घनघोषैर्वंशरावैः कलकण्ठीस्वनामृतैः ।
झर्झरस्वनितैश्चाशास्सम्पूर्णाः किन्नरीरवैः ॥ ५६

1. वक्षेमवृत्त्या 2. विप्रवदास्पदानि
3. भूभृद्वरा। 4. रहे

(V - 48) कालागरुक्षोदपटीरचन्द्र-
कस्तूरिकासूनकलापकान्ता ।
कीरावलीतोरणचामराश्च-
न्मणीविताना रुरुचे मही सा ॥ ५७

(V - 49) पद्मिनीपालपालिकानीतगन्धरजोभरेण, वरवरवर्णिनीवर्गविरचित-वासिताङ्गरागविशेषेण, रम्भोरुकाण्डोत्करपुरोन्यस्तफलपरम्परया, पूगीकन्धरापुञ्जितक्रमुकताम्बूलदलजालेन, मित्रकान्ताभिलक्षिता-रात्रिकाभिः श्रुतिहितद्विजभामिनीशोभनस्वरेण, मृगेक्षणादत्तमृगमद-जालेन च तत्र सर्वत्र शुशुभे शुभार्थवैभवम् । ५८

(V - 50) सर्वं तयोर्वनीदेव्यस्सञ्चिन्त्य सरिदन्विताः ।
सवाञ्छाऽद्रुफलाश्चक्रुस्सज्जं समयवैभवम् ॥ ५९

(V - 51) वधूवरक्षेमकरं वरलग्नमथाऽऽदृतः ।
वाचस्पतिर्विशेषज्ञो वासवं तं जगाद सः ॥ ६०

(V - 52) [1]सूर्यादिभिस्त्वयि शुभार्थधुरन्धरे स-
त्यार्यापगाद्रिषु विवाहमहत्सु सत्सु ।
आचार्यकार्यमखिलस्तुतमस्मदीय-
वाचार्यमेव हि वधूवरयोस्सुरेन्द्र ॥ ६१

(V - 53) अलिकुम्भझषेभारिचापगोमकराऽभिजित् ।
[2]कचस्तनाक्षिमध्यभ्रूकटिजङ्घाभिरद्रिजा ॥ ६२

(V - 53) अतुलाऽजाङ्गनाकीर्ति[3]रवक्रगतिशालिनी ।
अतोऽधुनास्या नितरामर्हा मिथुनकल्पना ॥ ६३

1. ....र...दिभिर्त्वयि 2. वचस्तना
3. रम...गतिशालिनी

(V - 54) आचार्योदितलग्नमद्रिपतये संवेद्य सम्यग्वृषा
सख्ये वक्त्रमियाय चञ्चलतरैस्सत्कार्यसिद्धिं ध्वजैः ।
कल्याणाचरणीयकर्म सुमनःकान्तामणीगीतिभि-
र्वर्ण्यैस्तूर्यमहारवैरथ वराह्वानं च संसूचयन् ॥ ६४

(V - 55) शक्रस्य साधितनिजाभिमतस्य सिद्धौ
श्श्रुत्वाऽगतिं स शुशुभे पुर एव मोदात् ।
सञ्चूर्णिताद्रिशतकोटियुते हितेऽस्मि-
न्नाखण्डले सति वसोः किमसाध्यमस्ति ॥ ६५

(V - 56) कुस्पृष्टिवर्जिते रत्नकूटचारिणि तत्पदे ।
[1]राजाऽतनोदात्ममौलिरत्नकूटाग्रसङ्गतिम् ॥ ६६

(V - 57) भक्त्याऽनतं भाग्यवन्तं भव्योद्वाहो भवेति तम् ।
[2]वदन्स वासवो वीक्ष्य वरामोदादवोचत ॥ ६७

(V - 58) ह्यस्सायमसन्नगरे सभायां
रत्नासनस्थो रसिकं भवन्तम् ।
लास्यावलोके ललितामरीणा-
मस्मार्षमालापककिन्नरीणाम् ॥ ६८

तदनु, ६९

(V - 59) विज्ञाय [3]मदनावेशविवशं मधुविह्वलम् ।
विधुनाऽतिविलोलं त्वां विषण्ण[4]हृदयोऽभवम् ॥ ७०

तदनन्तरं, ७१

1. ताजात्मनोदात्ममौलि 2. वदन् सन्
3. मदनावेशा एवशा 4. हृदयेभवम्

(V - 60) सहस्राम्बकबन्धोस्तत्पश्चाम्बकभवा व्यथा ।
नोचितेति भवत्तापनोदने तत्परोऽभवम् ॥ ७२

(V-61,62) प्रातः प्रालेयशैलोदधिविधुमचलं प्रार्थयन्कन्यकार्थं
कन्यादित्सोस्तदद्रेः पुरमथकलयन्मित्रकल्याणहेतोः ।
आज्ञमाद्रिस्रवन्त्यागतिरचलसुतारागनागाधिरूढं
कर्तुं त्वामागतोऽहं कलितपरिणयं गानवाद्यादिघोषैः ॥

(V - 63) इतीन्द्रवाचा हितया तदानीं
विनम्रशीर्षस्य विभोरभीष्टम् ।
मत्वा जना मन्त्रिमुखाः पुरस्य
हर्षादलङ्कारमकारयन्द्राक् ॥ ७४

(V - 64) अथ तदानीमनेकचन्द्रसूर्याकल्पशतेन सममतिशयध्वजमयमेरून-रचयन्, अधिकायमान[1]रम्भालिभिस्समं हरिचन्दननगानखातयन्, अभिनन्द्यवज्रकोटिप्रभाभिस्साकमाखण्डलमणिमण्डलवितानान्ययोजयन्, अमितहेमाकृतिप्रतत्या सममभिरामचित्ररेखाजालमकल्पयन्, अ(न)न्तकुमुदसन्तत्या सममगणितपुण्डरीकव्रजानघटयन्, वासवपुरःस्थितानेकवस्तुदर्शनजनितवासवपुरःस्थितामरजनाश्चर्यपूर्वमधिकारिजनाः । ७५

(V - 65) कान्तापणोर्वीघनकायमान-
[2](प्रपक्व)रम्भाफलवाञ्छयाग्रे ।
प्राञ्चच्छुकश्रेणिरिव प्रबद्धा
तदैक्षि ताक्ष्योपलतोरणाली ॥ ७६

1. रम्भालिभिरमाहरिचन्दन
2. ...र्यैरम्भा

(V - 61) [1]सम्यङ्किचखुरचलद्रथसालभञ्जी-
वीक्षापरामरवधूविततेर्विवाहे ।
वीटीप्रदित्सुवसुवीरपुरेन्द्ररोर्ध्व-
दोर्धीकृशाहिलतिकाफलिपूगसालान् ॥ ७७

(V - 67) हिमाम्बुसिक्ता वृतहेमचेला
सुगन्धसान्द्रा सुमनोमनोज्ञा ।
बभौ तदा धूपितबर्ह(कै)श्या
पूर्देवता दर्पणपूरितश्रीः ॥ ७८

तदनु, ७९

(V - 68) कल्याण[2]वाचिकितकाञ्चनपलिकालिं
संवाह्य तस्य शिरसा सकलावनीशाः ।
नो हेमपङ्क्तिधृतिरद्य [3]किलेति हृष्टा
नानोपहारसहिता नगरीं समेताः ॥ ८०

(V - 69) चञ्चद्वीणावंशवाद्यचतुरङ्गादिनिस्वनैः ।
नादात्मकब्रह्ममयं नगरं तत्तदाऽभवत् ॥ ८१

(V - 70) शतमन्युगिरा मौनिशतपत्रदृशोऽनयन् ।
शतभूषागन्धवीटीशतपर्वफलाक्षतान् ॥ ८२

(V - 71) मर्यादोचितसौम्यमाननिलया मन्द्रोल्लसत्तारका
राराजच्छुभरागपल्लवपदोन्मुद्रा स्वदृष्टीरिव ।
सद्रीतीर्गिरिजाविवाहसमये साध्व्यो जगुश्शोभानाः
वाणीशैलसुतापयोनिधिसुतावर्ण्यानुभावा मुदा ॥

1. सम्यङ्नीभ्र
2. वाचकित 3. किरेति

(V - 72) सुपर्वगाणिक्यशुभार्थदिव्य-
पलाशिरम्यामृतपालिकाभिः ।
सहाऽगमत्तत्सदनं शची सा
सुराधिपाश्वर्यसुखादिहेतुः ॥ ८४

तदनन्तरम्, ८५

(V - 73) त्रिलोकनेतुस्त्रिदिवाम्बुजाक्ष्यो
मत्वाऽऽशयं तस्य महीमघोनः ।
अभ्यञ्जनालेपनमज्जनाञ्च-
त्कल्पद्रुसूनाकलने सयत्नाः ॥ ८६

(V - 74) तारे कुरुष्व तरसा घनराजसेवां
भूभृद्वराङ्गमभिभूषय मेनके त्वम् ।
सर्वज्ञमौलिमभिमर्शय चन्द्ररेखे
रत्नावलीह [1]वसुसंवहनं विधेहि ॥ ८७

(V - 74) तैलेन सिञ्च तनुमस्य तिलोत्तमे त्वं
दक्षेति दिव्यदयितास्सरसं वदन्त्यः ।
सन्तोषपोषसहिता वसुसार्वभौम-
फालस्थलेन युयुजुः फलदाक्षतान्प्राक् ॥ ८८

(V - 75) आलोलकुण्डलमपाङ्गविजृम्भशोभ-
माकम्पिमध्यलतमावलमानतारम् ।
(आ)मोदमेदुरमतिक्वणपाणिभूष-
मास्वेदितालकमनेककतालनादम् ॥ ८९

1. वसुसंवहसनं

(V - 75) अर्धायतत्रिवलिरेखमपारलील-
मासन्नभृङ्गमतिचञ्चलतारहारम् ।
आनर्तितस्तनममर्त्यवधूषु काचि-
दभ्यञ्जनं समतनोद्वनीमघोनः ॥ ९०

(V - 76) अथ भ्रमरकाव्याकुलतां कलयेति वदन्तीमधुनैव भ्रमरकव्याकुलता गतेति निगदन्ती, पृथुलकुचोज्जृम्भ(णं) न[1] रचयेति भणन्तीं पृथुलकुचप्रकाश(स)मय एवेति गृणन्ती, स्नेहेन वरतिलकं द्रवीभूतमेवेति वाचयन्तीं स्नेहेन वरतिलकं द्रवीभूतमेव जानीहीति रसन्ती, कट(कार)वं निकामं न कलयेति (कथ)यन्तीं कल्याणगौरवेण कटकारवो महान्किलेति सदुत्तरं दिशन्ती वैदग्ध्येन शुकतुण्डशोभ(न)नखाञ्चलैरलकानालिखन्ती पाणियुगलेन पश्चाच्चिकुरसंयमं साधयन्ती मज्जनस(म)योऽयं महीपाल मा विलम्बतामिति जगाद समोदम् । ९१

(V - 77) मेघवेण्या सिंहगत्या मृष्टपादौ वसुप्रभोः ।
अटन्तौ वीक्ष्य कन्यैका हस्तदाऽभूज्जलौकसि ॥ ९२

तदानीं प्रजोत्स(वो) जजृम्भे । ९३

(V - 78) सौमुख्यतस्स्वस्सुदृशां स्वकुम्भा-
द्राजाऽमपुलचोऽरचयन्स्नुतं वाः ।
त्रपानतास्यासु च तासु नैवं
रसज्ञरत्नप्रकृतिस्तथा हि ॥ ९४

(V - 79) काचिद्भ्रमौ विमुकचान्करजैर्विमृज्य
[1]गन्धोत्थितामलकतैलनियोजनेन ।

1. रवयेति 2 गन्धोद्धलामलक

चाम्पेयगन्धविवशालिचयानवन्ती
वर्ण्येन सूनमधुनेव वसन्तलक्ष्मीः ॥ ९५

(V - 80) हस्तैर्नियोज्य घनगैरिकहारिकुम्भा-
नानम्य कङ्कणगणोल्बणपुष्कराणि ।
तं राजकुञ्जर(म)थाऽऽहतकुम्भिनीकं
पद्मिन्यनीकमुद(कौ)कसि पर्यषिञ्चत् ॥ ९६

(V - 81) ताम्राम्बरामृष्टतनुः कयाचि-
त्कलानिधिः कल्पितगौरवासाः ।
स निर्गतोऽभूज्जलसद्ममध्या-
त्सचन्द्रिकश्चन्द्र इवास्तसन्ध्यः ॥ ९७

तदनु, ९८

(V - 82) [1]तत्रोन्न(ता)वर्ततलप्रवाल-
व्यावर्तकाम्भोनिधिवीचिशङ्काः ।
न्यवर्तयन्तस्य निलिम्पकान्ता-
स्सन्मङ्गलारात्रिकसम्प्रदायम् ॥ ९९

तदनन्तरं, १००

(V - 83) शुभाङ्कितां शोभनवैजयन्तीं
कल्याणवेदिं कमनीयगन्धाम् ।
[2](ययौ) चतुःस्तम्भभृदम्बुजाक्ष-
वक्षस्समानां वसुराजरत्नम् ॥ १०१

(V - 84) काचित्कं विजलं शरद्विधुमुखी तेनेऽद्रिजाकामिनः
काचिन्मानसमञ्जुला मृदु ववौ तं राजहंसं सुखम् ।

1. तत्रोन्न
2. चतुस्तम्भभृतं मृगाक्षी

कञ्जाताशुग(मो)हनाय कुसुमं काचिल्लताङ्गी ददौ
चक्रे गन्धभरं परा सुरभिचारित्वा जगज्जीवनम् ॥

(V - 84) लावण्यसिन्धुं तं काचिल्ललितं घनकङ्कणैः ।
विमलस्वातिविख्याता वितेने मणिभूषितम् ॥ १०३

तदनन्तरम्, १०४

(V - 85) कर्पूरसारतिलकं कलयन्कुबेरा-
त्सम्प्राप्तरत्नमकुटं स वहन् रराज ।
रात्रीश्वरं कुशमधोरचयन्ननन्त-
रत्नं दधन्मकुटराजमिवाभ्रकेशः ॥ १०५

(V - 86) स्वस्त्रीनद्धं तत्किरीटं स्वस्स्रङ्मौक्तिकभाषिकम् ।
सुरागशृङ्गगङ्गात्रिस्रोतस्स्रुतिरिवाबभौ ॥ १०६

(V - 87) मुक्तामणी मुग्धघनातिदीर्घौ
शक्रार्पितौ तच्छ्रवसोरभूताम् ।
गीश्रीशचीड्या गिरिजेति वक्तुं
श्रुती समेताविव जीवशुक्रौ ॥ १०७

(V - 88) श्वेतान्तरीपघनकूपसुधापमेघ-
वर्षामृताब्धिभवमौक्तिकतारहारः ।
दीर्घायुरीप्सितकृदेष इतीरयंस्तं
प्रादात्प्रमोदभरितः प्रभवे प्रचेताः ॥ १०८

(V - 89) तद्दत्तहारलतिका तदुरस्यदर्शि
भूभृत्सुताभजनभूरिसुखौषधेन ।
दिव्येन हृत्तलबहिर्गलिता दृढान्तः-
कामप्रयुक्तकलिकास्त्रपरम्परेव ॥ १०९

(V - 91) गाढं भुजेऽस्य गरुडार्पितगारुडाश्म-
केयूरमैक्षि गिरिजावरणोर्ध्ययोर्व्याः ।
संश्लेषचक्रमिव तद्भुजसङ्गिनोद-
स्संलक्षितः क्षितिसमाश्वसनक्रियेव ॥ ११०

(V - 92) वृत्रारिप्रियपाणियुग्मविलसद्वैडूर्यभूषावली
पर्जन्याधिपयोजिताऽपरिमिता शोभाविशेषान्विता ।
क्षेत्रश्रीकर[1]सूत्रबन्धकमला तत्क्षोणिपागामिस-
त्क्षेत्रश्रीकरसूत्रबन्धकमलां संसूचयन्ती बभौ ॥ १११

(V - 93) अब्जरागविरुदाङ्घ्रिभूषणं
तत्पदे धनदजार्पितं तदा ।
तन्महस्तपनदीप्तपार्श्वव-
द्वन्द्नेत्रवलयाद्रिवद्बभौ ॥ ११२

(V - 94) ददौ जयन्तो दययाऽथ तस्मै
रत्नाञ्चलं रक्तिमशोभिचित्रम् ।
सुवर्णरेखं सुरभूजजातं
सूक्ष्माम्बरं सूचितसर्वभाग्यम् ॥ ११३

(V - 95) व्रीलाविवर्तितमुखी विबुधाङ्गनैका
मुग्धा दधौ मणिमयं मुकुरं तदग्रे ।
मद्गण्डभागमणिदर्पणतारतम्यं
पश्याद्य पार्थिव(व)रेत्यभिलापिनीव ॥ ११४

(V - 96) वसुक्षितीशाय तदा वलारि-
र्मन्दाकिनीरत्नमयाब्जदाम ।

1. सुचित्रबन्धकमया

दातुं कराब्जेन दधन्मनोज्ञं
जगाद भूपं जलजास्त्ररूपम् ॥ ११५

(V - 97) स्वर्णाचलाग्रसुरसिन्धुतटाभिजात-
मन्दाररत्नमयसूनपरागपङ्के ।
जातैर्मनोज्ञजलजैर्जनिता स्रगेषा
लक्ष्मीयशोविभवलाभविशेषहेतुः ॥ ११६

(V - 98) कदाचिदपि न म्लानं सदा सुरभिलं महत् ।
अदो रविनिभं माल्यं प्रदोषशमनं सखे ॥ ११७

(V - 99) शरजातान्यमून्यन्यश(र)जाताधिकान्यलम् ।
शरजातापहान्युग्राशरजातामरद्विषाम् ॥ ११८

(V-100) शिलीमुखक्षेप्यपराजहंस-
मनन्तरत्नद्युति[1]हार्यनर्घम् ।
अदस्तपःश्रीलसदब्जजालं
घनोदयाश्चद्घनचित्रपात्रम् ॥ ११९

(V-101) पद्मानि मोहशून्यानि सद्मानि जयसम्पदाम् ।
[2]छद्मानि नो द्विषामन्यपद्मानि न समान्यतः ॥ १२०

(V-102) प्राचीनपद्मोदरनाभिपद्मं
विश्वं सृजत्येव विधेर्वशेन ।
पद्मा इमे प्रार्थितवस्तुजालं
जगत्त्रयेऽद्य जनयन्त्यनिद्राः ॥ १२१

(V-103) वसुप्रभो वास(व)मालिकाङ्कं
सद्मासनं सारसमाल्यमेतत् ।

1. हार्यनर्घ्यम् 2. च्छद्मानि न द्विषा

तदङ्कमुर्व्यामपि तावकं स-
देति क्व नाख्या हितवासनानाम् ॥ १२२

(V-104) दूरेऽस्य दुष्करसुपर्णरुचो भुजङ्गा
नार्हा नरा नलिननाथरुचोऽवलोके ।
ऐन्द्रं न धार्यमिदमिष्टिभुजां नगारे
तादृग्दिशामि तव दाम निजादभेदात् ॥ १२३

(V-105) अदो गृहाणेत्यभिधाय तस्मै
ददौ नगारिस्स दधौ च दाम ।
वलारिबन्धुर्वसुसार्वभौम-
स्साक्षात्सहस्राक्ष इवैक्षि तेन ॥ १२४

(V-106) तदेन्द्रदुन्दुभिध्वानस्तादृगद्रिपुरे वरे ।
तत्कुमारीपरिणयं त्वरयामास तद्विभोः ॥ १२५

(V-107) सख्यस्तदा सत्वरमूचुराले-
रभ्यञ्जनं स्नानमलङ्क्रिया च ।
सम्पूर्यतां सन्निहितं च लग्न-
मश्रावि तूर्यध्वनिरञ्जसेति ॥ १२६

(V-108) साध्व्योऽथ तां हरिकटाक्षसमागताद्रि-
वेश्मारुणाश्ममयवेदिगवज्रपीठम् ।
नीत्वारुणाक्षततति निटले निधाय
चक्रुस्सकुङ्कुमपटीररजोऽङ्गलेपम् ॥ १२७

(V-109) गुम्भत्तैलविभां पुरा वलयभूगोमेधिकच्छायया
व्यावलगत्कुचहारतो वसुलसत्कुम्भाम्बुधारां ततः ।
निःश्वासैर्व्यजनानिलानथ निजैः कल्हारशोभां क्रमा-
त्तन्वन्त्यञ्जलिभिस्ततान तरुणी काचित्तदभ्यञ्जनम् ॥

तदा प्रसाधिकाशृङ्गार एव पर्वतकुमारिकामङ्गलस्नानविभवसामग्री-
मतिं जनानां जनयामास । १२९

(V-110) सा चन्द्रकान्तजलसद्मनि हेमपीठे
चञ्चत्सखीनिहितचन्दनकेशपाशा ।
कञ्जालयेव ददृशे कलशाम्बुराशे-
राविर्भवन्त्यधिकवीचिविशीर्णफेना ॥ १३०

(V-111) प्रस्विन्नगण्डयुगले प्रमदोत्करेण
भृङ्गारभाजि सुमनोवरदन्त्युदग्रे ।
सौवर्णकुम्भसलिलस्रुति सद्मसाक्षा-
ल्लक्ष्मीरिवैक्षि ललिताब्जकरा कुलाद्रेः ॥ १३१

(V-112) गात्राम्बुशोषोचितगौरचेलं
कण्ठांसवक्षोजकपोलयोगात् ।
तदैव तद्रागरसार्द्रमासी-
त्कान्तास्पृशः कस्य नु शुद्धभावः ॥ १३२

(V-113) काञ्चीविभूषणितकाञ्चनरूषिताग्रं
रम्याङ्घ्रिभूषणितरत्नमयैकपार्श्वम् ।
हारायिताश्रिमणि हारिदुकूलमस्या-
स्सूक्ष्मं महासुरभिलं सुदृशो बबन्धुः ॥ १३३

(V-114) तटिनीतरुणीषु कञ्जरूपैः
कलितारात्रिककर्मसु प्रदीपैः ।
विशदांशुमुखी विवाहवेदीं
विभुवक्षोविपुलां तदाऽससाद ॥ १३४

(V-115) आकल्परम्यामिन्द्राणी सा कल्पसुममालिकाम् ।
आकल्पभूतिदां तस्यै श्रीकल्परुचये ददौ ॥ १३५

(V-116) काचित्केशघनं बबन्ध विजलं कन्यामणेरादरा
त्काचित्कैश्यतमोभरे शशिरवी कल्याणरूपौ न्यधात् ।
काचिच्चम्पकमालिकामरचयत्कान्ताकचाल्युत्करे
काचित्कुन्तलसत्पथे व्यकलयन्निर्दोषमुक्ताल्युडून् ॥

(V-116) काचित्कचेन्द्रनीलेषु कलयामास कोमलान् ।
कनद्दूर्वाङ्कुरान्तस्याः कलितान्गारुडोपलैः ॥ १३७

(V-117) शृङ्गारपूरघनवेणितटं तरुण्या-
श्श्रीमाषिकं मणिललामजलोद्भमौकः ।
कुल्यां च कोमलकुरङ्गमदात्तरेखां
भ्रूपुण्ड्रभूरिरुचयेऽरचयन्तदाल्यः ॥ १३८

(V-118) श्यामोज्जृम्भिततारकारुचिमहासक्त्या वसुस्वामिनं
[1]पश्यन्त्याः परितः प्रकामशरसद्दर्पं समेत्याधिकम् ।
नित्यामोदतया जयेति गिरिजानेत्राब्जयुग्मे न्यधा-
द्दृश्यश्रीघनमूलकर्ममतिदं वामालका कज्जलम् ॥

(V-119) अतनुमहितधन्वाभोगसीमाशुगानां
पटुतरगतितान्तापाङ्गपाताध्वगानाम् ।
श्रुतिसदमृतकूपोपान्तराजन्निपान
द्वयमिव ददृशेऽस्या हीरताटङ्कयुग्मम् ॥ १४०

(V-120) कर्णप्रह्यमृतं वतंसकलिकावार्यन्तनद्धप्रभा-
पालीदण्डगवृत्तभूषणलसत्पात्रे गृहीत्वा प्लुतिम् ।
तन्वन्त्यो वरहीरकान्तिमिषतस्ताटङ्ककुल्यामुखा-
त्तादृक्पत्रलताश्रियं व्यरचयन्तस्या वयस्याजनाः ॥

1 सर्वत्रेक्षयताऽत्र कामशरसद्दर्पसमेत्याधिकम्

(V-121) काश्मीरजन्मकर्पूरकस्तूर्यादिकदम्बकैः ।
तस्यास्तनुमलिम्पंस्तास्तद्गन्धसुमवासितैः ॥ १४२

(V-122) अथ तरुणीमणेरधरमाधुर्यमैक्षागतामृतघुटिकामनीषाकरनासामणिं नासाभुवि निधाय, समयानुगुणमहोच्चसङ्केतनवग्रहशङ्काकरनवरत्नमालिकां पयोधरतटे नियोज्य, भुजालतायां किसलयकलिकामधुपकीरधीकरकेयूरकङ्कणादिभूषालिमाकलय्य, कामकुचदुर्गकल्पिताधरवप्रवलयशेमुषी[1]कृदोढ्याणभूषाविशेषमारचय्य, पश्चादष्टाङ्गयोगकलनाफलमहिम्नेव वज्ररशनां जघनसीमनि निबध्य, रतीरमणविरुदाङ्कमतिकरमणिमयमञ्जीरयुगलमङ्घ्रियुगलेन सखीजनो योजयामास श्रीजयावासः । १४३

प्रसाधनानन्तरं ; १४४

(V-123) पद्मा नितान्तमवनाविनपादरागाः
पद्मद्वयीयमिनमस्तकरागदेति ।
कन्याङ्घ्रियावककृताऽथ कयाचिदुक्ते
सा केवलं समतनोत्सहसाऽक्षिरागम् ॥ १४५

(V-124) मुक्तारत्नततेः प्रसूपितृभुवो मोदात्तदङ्गश्रिया
कल्याणार्हविशेषकान्तिमतुलामापूरयन्केवलम् ।
सख्यस्तास्सहजानुरागकलनासम्मान्यसौभाग्यव-
त्कान्तालोकमणिं तयाऽथ सदलङ्कर्तुं विमुग्धाः किमु ॥

(V-125) प्राश्वद्भूषारत्नसखीप्रतिबिम्बश्रिया वधूः ।
दिदीपे साङ्गकल्याणदेवतावेष्टितेव सा ॥ १४७

1. कुदोड्डाण

(V-126) सुवासिनीसुरवधूशोभिगेयसुधाभरैः ।
वाणी धवलवर्णालं प्रादुरासीत्तदा मुदा ॥ १४८

अद्रीश्वरावलिरभूदचला नितान्त-
मामोदपूरिततराऽभवदापगालिः ।
अस्त्रप्रभीरुततिराप भृशाऽनिमेषा
हर्षामृते हरिमुखा विबुधा ममज्जुः ॥ १४९

कामाक्षि देवि करुणामयि कामकोटि
काञ्चीपुरीश्वरि कदम्बवनीनिवासे ।
कान्तैकचूतपतिना कलितावधाना
कर्णामृतं कलय काव्यमिदं मदीयम् ॥ १५०

इति श्रीकामाक्षीदासकालहस्तिकविकृतौ
वसुचरित्रे चम्पूकाव्ये
पञ्चम आश्वासः

---

कालहस्तिकविविरचितं

# वसुचरित्रम्

षष्ठाश्वासः

कामाक्षि देवि करुणामयि कामकोटि
काञ्चीपुरीश्वरि कदम्बवनीनिवासे ।
कान्तैकचूतपतिना कलितावधाना
कर्णामृतं कलय काव्यमिदं मदीयम् ॥ १

(VI - 2) अन्यादृशानथाकल्पानन्या दिक्पालयोषितः ।
कान्यायाः [1]प्रेषयामासुर्धन्यायाः करुणाभरात् ॥ २

(VI - 3) शच्यादिशक्रादिसुरीसुरेषु
सम्भूष्य तौ लग्नसमीक्षणेषु ।
तद्योग्यरत्नाय स लोकबन्धू-
रत्नाकरं रागभरादिवाप ॥ ३

(VI - 4) वसुराड्गिरिकाविवाहवीक्षाऽ
परदेवीपरिपूरिताभ्रसौधे ।
किमु सान्ध्यविभान्धकारतारा:
[2]घुसृणालेपनधूपरङ्गवल्यः ॥ ४

(VI - 5) त्रयस्त्रिंशत्कोटिदेवमहिषीणां महेक्षणे ।
अनन्तसौधगानां किं गवाक्षा गाढतारकाः ॥ ५

---

1. भूप्रेषयामासुः 2. घुसृणेलेपन

(VI - 6) आरुह्य सौधमधिकोन्नतवैजयन्तं
वर्ण्यां तदुत्सवरमां वसुराजपुर्याः ।
सोत्कण्ठमीक्षितसुराधिपशोभनाङ्ग्या
[1]रम्यास्यवद्विधुरलक्ष्युदयाचलाग्रे ॥ ६

विबुधकुलसार्वभौमविशेषसुहृद्वसुवीरविवाहवेलायां ; ७

(VI - 7) चन्द्रो रुचा चन्दनसेकमुर्व्यां
दिशातटे दिव्यसुधानुलेपम् ।
विधाय खे पाण्डुवितानलक्ष्मी-
मलञ्चकारालमजाण्डगोलम् ॥ ८

(VI - 8) अतिनिकटगमासील्लग्नमित्याशु जीवे
वदति विनयगुम्भद्वासवोक्त्या सतीनाम्
महति च शुभगाने मागधालिस्तवेऽसौ
सितगजमधिरूढश्शीतशैलं यथेशः ॥ ९

(VI - 9) सितेभस्कन्धभाक्शोभा श्वेतद्वीपगशौरिवत् ।
अनन्तमाणिक्यमहाभोगच्छत्रसहस्रतः ॥ १०

[2]ढमामिकातम्मटभेरिकादि-
वादित्रघोषा वसुधाभिदार्हैः ।
असूययेवामरवाद्यघोषै-
र्भर्माद्रिकूटावलिभञ्जनोत्काः ॥ ११

1. रम्यास्य त वद्विधुलक्ष्युदयाचलाग्रे ।
2. तमामिका

सत्केतुदण्डाहतिसान्द्रभीति-<br>
  सर्वंसहायातसदावली(व) ।<br>
पाटीरतैलोज्ज्वलपाणिदीप-<br>
  परम्पराऽलक्षि परार्ध्यरूपा ॥ १२

साम्राणिकाधूपसमग्रधूम-<br>
  च्छत्रान्तरच्छायतमांसि हन्तुम् ।<br>
नानार्कचन्द्राग्न्युदयाभशैल्प-<br>
  तज्ज्योतिषेवास तमी दिनश्रीः ॥ १३

रम्यात्मसाम्राज्यरमास्थिरत्व-<br>
  विद्यार्थिविद्युत्स्थितिमार्गणेतम् ।<br>
वियोगपाण्डुभ्रमिवैक्षि तासां<br>
  पद्माक्ष्युपर्युद्धृतपाण्डुचेलम् ॥ १४

तत्सविधदेशे, १५

शक्राज्ञया परिणयोचितसारनाना-<br>
  वस्तुप्रकर्षभरिता वसुधावतीर्णाः ।<br>
मन्दारवल्लय इव काश्चन मङ्गलार्थ-<br>
  श्रीगन्धपुष्पफलचेलकरा विरेजुः ॥ १६

धीरं तद्वसुमानसं गिरिसुताधीनं सदा तन्वतः<br>
  कामस्य स्तुतिपूर्वकं कुसुमसत्कान्तचापेक्षवः ।<br>
वीथीनीतजयेन्दिरा इव चिरं विख्यातमाल्योल्लस-<br>
  त्पुण्ड्राः काश्चन पूर्णचन्द्रवदना मोदात्पुरस्ताद्ययुः ॥

कञ्जास्त्रकोटिकनदेतदधीशरूपं<br>
  (द)ष्टं नु वो भुवनदिव्यकुमारवृन्दे ।

एवं सुराहिततरुणीरिव वेदयन्त्यः
काश्चित्पुरोऽस्य ननृतुः [1]कलिताभिनीत्यः ॥ १८

कल्याणार्हमुहूर्तवीक्षणपरैः कालज्ञसप्तर्षिभि-
र्देवापातितदिव्यसूनजरजोदुर्लक्ष्यखादग्रतः ।
मन्त्राकृष्टमहोडुचक्रधिषणाकृद्यन्त्रडोलाभ्रम-
द्वालाश्शाणगणभ्रमन्मधुसुहृद्धाणभ्रमं चक्रिरे ॥ १९

रथेषु हैमेषु रसास्थिरेषु
मुहुर्नटन्त्यो मुरजादिनादैः ।
तद्यन्त्रपुत्रीततयो विमान-
नटन्नभोनार्य इव व्यराजन् ॥ २०

वर्णनीयं ध्रुवं चक्रे वारस्त्रीगतिवैभवम् ।
वसुधापदविन्यासवैधुर्यं वासवस्त्रियाम् ॥ २१

[2]पल्यङ्किकाप्रभृतिपत्रतलावरूढ-
पादाब्जचारिनरपालकिरीटपालैः ।
श्रीपद्मरागरुचिरग्निशिखामुखानां
प्रायस्तदा मलिनपद्धतिमाचचार ॥ २२

सर्वार्हमार्गमर्यादाशासिदण्डधरावलेः ।
सम्भ्रमोऽदान्नूनमतिश्यामिकां समवर्तिनः ॥ २३

कृपाणिकाचाकचक्यं क्रूरवीरततेर्ध्रुवम् ।
निशाचरकरालासिनैल्यं दिक्कोणगं व्यधात् ॥ २४

सर्वतोमुखसमृद्धवाहिनी-
राजिसेवितरसेशसम्भ्रमः ।

1 कलिताभिनित्यः 2 पर्यंकिका

स्वामिनो जलधिसन्ततेर्ध्रुवं
व्याप्तिसंयतजडस्थितिं व्यधात् ॥ २५

कर्पूरचन्दनाश्चर्त्कस्तूरीसारतो वसन्तमहम् ।
कलयन्नृपालिरतनोद्गन्धवहस्यातिलोलतां प्रायः ॥ २६

मध्ये मध्ये स्तुतिकृतां मन्त्रवादिकलितं धनम् ।
महितं धनदस्यातिमन्दाक्षत्वं ध्रुवं ददौ ॥ २७

प्रचण्डनटनाढ्यानि प्राचीननटराट्तनौ ।
परं प्रकटयामासुः पाण्डिमातिशयं ध्रुवम् ॥ २८

आशापतीनामप्येवमाशास्यमतिसुन्दरम् ।
अहिवल्लभजातीनामतिदुर्लभमञ्चितम् ॥ २९

सिद्धानां प्रागननुभवासिद्धमाश्चर्यकारणम् ।
असाध्यं साध्यसङ्घानां गन्धर्वाणामगन्धकृत् ॥ ३०

विचारणीयान्यतरं चारणानां सदा परम् ।
अनक्षिलक्षितं पूर्वं यक्षाणामतिदक्षिणम् ॥ ३१

अनन्यसामान्यतरमनेकविभवं बभौ ।
तदा कोलाहलपुरं तदाऽप वसुभूपतिः* ॥ ३२

तदानीं, ३३

(VI-10) व्रीडामनोहरदशा विविधावनीश-
चूडातिरञ्जितपदं सुखमीक्षि(तुं) तम् ।

* All the above verses form 10 to 32 are translations of a big prose piece (VI-9) in the original.

[1]श्रीदाडिमीफलकुचाश्रिततन्नगर्यः
क्रीडार्थसौधतलमारुरुहुः कृशाङ्ग्यः ॥ ३४

(VI-11) तदनु सरणिसन्दर्शकमूर्तरागधीकरपदच्छायायां पुरोदेशगुम्भितायां, त्वरागतिनिमित्तचरणतलनम्रवीक्षाप्रहितदूतिकाशङ्काकरकर्णावतंस-कमलकलिकायां पादगलितायां, निश्वासपवनघनतरोच्छूनकलित-निवेष्टनतरलभोगिमतिकरनागबन्धोढ्याणभूषणे चलितसंश्लेषणे, परि-खिन्नकृशतरविलग्नदेशकरुण(या) कुचयुगलनिहिततुहिनजलशेमुषी-करघर्मवारिषु विलग्नविसारिषु, जघनवारणस्कन्धाधिरूढमदन-बिरुदाधोरणोत्क्षिप्तनीलचामरविशेषधिषणाकरगलितबन्धधम्मिल्लसारे कृतपदानुसारे च सति वसुवसुमतीवरावलोकनाय काचिदागता जनितजनानन्दजाता ललितवनिता । ३५

(VI-12) काचिज्जवादुरसि कल्पितरत्नवीणा
राजत्सुवर्णतनुरङ्घ्रिरसत्कलापा ।
पार्श्वाटहंसपरिचालकृदाजगाम
वाणीव वर्ण्यचतुरास्यमुखेक्षणाय ॥ ३६

(VI-13) हस्तात्तहल्लकपुटी हरिणीदृगेका
तत्रैक्षि वेगगतितच्छदतन्तुशेषा ।
अस्याहमेव सदृशीत्यभिपात्य मान-
तन्तं परश्वथमतन्गुणच्छदेव ॥ ३७

(VI-14) मध्यं निबध्य मणिमालिकया कराभ्यां
धृत्वा कुचौ जितघटौ द्रुतमागतैका ।
मान्यात्मभूषणगमध्यविदारणोद्य-
द्वक्षोजकोपभरवारण[2]कौतुकीव ॥ ३८

1 श्रीडाडिमी 2 कौमकेव

(VI-15) श्रीवज्रकुट्टिमतले श्रितहेमरत्न-
भूषातनेरिभगतेर्भृशवेगगत्या ।
मुक्तासरो हृदयमोदविशेषक्लृप्त-
मुक्ताभिषेक इव मुग्धपदे जगाल ॥ ३९

(VI-16) मार्गे कैश्यमवारयद्धनधियं माल्याहिना बर्हिणं
शैलाशङ्किमृगं गरुत्मदुपलस्रग्दूर्वयाऽस्याः कुचौ ।
शारीं कल्पलताधियं शयतलं सद्रत्नपालीफलै-
र्हंसं पद्मधियानुगं पदयुगी हीरात्मभूषाबिसैः ॥ ४०

एवमवनीपावलोकनगमनान्तरायभूतनिजपोषितानुयायिपक्षिमृगवर्ग-निरोधकस्वावयवमात्रसहायभूतेति सखीजननन्दिता काचनसमागता महिता वनिता । ४१

(VI-17) अवाकिरन्भूपमनङ्गरूप-
माचारलाजैरथ पौरकन्याः ।
सुधालवैस्सिन्धुसुताविवाह-
समुत्सुकं शौरिमिवाब्धिवीच्यः ॥ ४२

तदनु, ४३

(VI-18) गङ्गादिसाध्वीगणशैलराज-
प्रत्युद्गतस्तत्प्रतिहारभूमौ ।
स्ववेल्लिसाहो[1]स्वनिताऽवरूढ-
वलारिनागो वसुसार्वभौमः ॥ ४४

---

1 स्वनितेवरूढ

(VI-19) रत्नक्षोण्यथ पाद्यदा स्वरमणीगीतिद्रवद्वारिणा
किञ्जल्कैस्सुमकायमानमनिलाकीर्णैर्विशीर्णाक्षतम् ।
चित्राराविकपुत्रिकाः करमणिश्रीभिः कृतारात्रिका-
रम्भाली मधुपर्कदा फलरसैरासीच्चिरं द्वारगा ॥ ४५

(VI-19) विवाहवेलाविहितोपचारे-
ष्वे(वं कृ)तेष्वद्रिगृहश्रिया प्राक् ।
प्रधानिनिर्दिष्टपथस्स भेजे
कल्याणवेदीं कमनीयलक्ष्मीम् ॥ ४६

(VI-20) दन्तोन्नतस्तम्भसुचामरालि-
कक्ष्या कदल्यादिकलापकुम्भा ।
आमोदसारङ्गमदाग्रपद्मा
रराज भद्रेभरमेव साऽग्रे ॥ ४७

तदनु ४८

(VI-21) माणिक्यपीठं मनुजाधिनाथो
महीधरेन्द्रानुमतोऽध्युवास ।
श्रीविष्णुपाणिग्रहचित्रशोभि-
विवाहगेहे वसुवेदिकायाम् ॥ ४९

अथ यथाशास्त्रं, ५०

(VI-22) सुतामधेनुर्दधिमिश्रसुरद्रुमन-
माध्वीमनोज्ञमधुपर्कमदात्स तस्मै ।
मुक्तायिपात्रनिहितं मुरवैरिणेऽब्धि-
रिन्द्रार्पितामृतमिवात्मसुताप्रदाता ॥ ५१

तदनु शनैश्शनैः ५२

(VI-23) पादाङ्कधन्यशशिपांसुजरङ्गवल्ली-
सन्न्यस्तपद्मकरा गिरिजा ससाध्वी ।
वीक्षांशुपूतमणिभूतरनीलभावा
तद्राजभाग्यकमलेव तदाऽससाद ॥ ५३

(VI-24) [1]गुर्वाज्ञया तमथ गोत्रजया युयोज
साध्वीजनोऽरुणतिरस्कारिणीसकाशात् ।
प्रातर्मरुद्विकचपङ्कजिनीपराग-
राज्यन्तिकादिव रथाङ्गखगं रथाङ्गया ॥ ५४

(VI-25) रामाकराब्जमथ राजकरानुषङ्गा-
त्कन्यार्थहस्तघटनेन करोऽपि राज्ञः ।
कामं लसेदिति गुरुर्वरकौतुकाङ्कं
रक्षामिवोभयकरेऽरचयत्समन्त्रम् ॥ ५५

(VI-26) मौनिव्रजेन सुमुहूर्त इतीरितोऽद्रि-
रशङ्कापकृत्यमतिशौर्यमतान्तमाल्यम् ।
मत्वाऽच्युतं तमदिशन्महितां तनूजां
लक्ष्मीगुरुर्ललितभाग्यनिधिं सधारम् ॥ ५६

(VI-27) व्रीडानम्रशिरोविभूषणविधुग्रह्नानुबिम्बान्वित-
श्रीनक्षत्रसराढ्यतद्गलतले माङ्गल्यसूत्रं न्यधात् ।
सत्कल्याणगुणाकरोऽथ स मुदा चन्द्रार्कताराग्रभू-
दीव्यन्निस्तुलनित्यतद्गुणवरे देवप्रशंसावहे ॥ ५७

(VI-28) सा साध्व्युन्नमिता मुदा समकिरत्तन्मूर्ध्नि [2]शेषाक्षता-
न्तन्मौलिस्थितरत्नबिम्बिततदाकारं निरीक्ष्यालिषु ।

1. गुर्वाज्ञयैतमथ 2. शेषाक्षतान्

जल्पन्तीष्वियमैक्षि किं पतिशिरस्साध्व्यारुरोह क्षणा-
न्नाहं किन्तु [1]धरेश्वराग्रवसतिर्नद्यात्मजाया इति ॥ ५८

(VI-29) कीर्णे शुक्तिमतीभुवा करपुटीशुक्त्याऽथ मुक्तागणे
पत्यग्रे गुणवारिधिस्स मृदुपाण्यग्रेऽकिरत्तन्मणीन् ।
[2]कान्ताकैरय कराब्जकायसुषमासंसक्त[3]तादृग्गुणे
नानावर्णमणिप्रकर्षमतिदे तद्वैभवज्ञापके ॥ ५९

(VI-30) श्रीमहोनिधिरशेषपद्मिनी-
सूनसच्छदयुतांशुकाञ्चलः ।
आबभौ द्युतिवृताम्बरासने
प्राज्ययोगहुतभुक्प्रकाशदः ॥ ६०

(VI-31) चिक्षेप साञ्जलि[4]विभांचितताम्रलाजा-
नागामिसर्वमखभुक्तिनिमन्त्रणार्थान् ।
शोणाक्षतानिव शुचावनयोः प्रसन्न-
स्सोऽपि प्रदक्षिणशिखाभिरदाच्छुभार्थम् ॥ ६१

(VI-32) तातोत्सङ्गनिवासवासनतया तद्राजहस्तान्वय-
श्रीसौख्यामृतपारवश्यविधया किं वा शिलायोजनम् ।
सेहेऽसाविति सिद्धसाध्यविनुतौ सोऽश्माङ्घ्रियोगं व्यधा-
न्मञ्जीरस्वनितेषु सत्सु सुतनोर्माङ्गल्यशंसिष्विव ॥

(VI-33) श्रीवृद्ध्यर्थमरुन्धतीक्षणविधौ श्रीमत्कटाक्षेक्षणे
दम्पत्योर्मिलिते मिथोऽथ दयिता दृष्टीर्ह्रियाऽचिक्षिपत् ।

1. धरेश्वराग्रनिवसन्नद्यात्मजाया इति । 2. कान्ताकेल्य
3. तादृग्गुणे 4. विभाचिर

साध्वीपादतले तदीयविलसत्साध्वीत्वरीत्याप्तये
फुल्लेन्दीवरपुष्पपूर्तिभिरसौ पूजामिवातन्वतो ॥ ६३ ॥

(VI-34) चक्रातेऽथ शुचेः प्रदक्षिणविधिं चञ्चत्सुरेन्द्रैस्समं
रेजाते समवेक्ष्य तौ प्रमदं स्त्रिग्धत्सुराध्वद्रुरैः ।
भेजाते बहुलाशिषा हृन्नितोभिद्रुम द्राक्षिता-
लैक्षैतामवलोकिलोलमकुटैराचारनीराजनाम् ॥ ६४

(VI-34) तावत्पर्यतामिन्द्रदत्तामृतवराशनैः ।
बान्धवानुत्सवायातवर्हिर्मुखगणैस्सह ॥ ६५

(VI-35) वृत्रहा वाचयामास त्रिबुधैः पारितोषिकम् ।
विविधामूल्यरत्नानि विचित्राण्यम्बराणि च ॥ ६६

(VI-36) पाण्यङ्कयन्वितगण्डशैलपटलीमञ्जावहेमायुत
साराधःकृतमारुतास्थितिलसत्सारङ्गधीकृद्धयान् ।
सौदामिन्यनपायमेघमतिकृत्सद्रत्नराजद्रथा
[1]न्हेलायानलसल्लतालिविषणालीलादकन्याशतम् ॥

(VI-36) देहभृत्स्वर्णदुर्वर्णधौतानि विविधान्यपि ।
शयनासनपात्राणि शैलेन्द्रो विमदे ददौ ॥ ६८

(VI-37) कस्तूरिकामृगाऽमोदकारणौ गुणा इमे ।
माननीया मा(म)श्काङ्कमहाविलसिता ननु ॥ ६९

(VI-37) कर्पूरसारकदलीकाण्डगन्धद्रुमा इमे ।
मज्जीवनाधिकतरा महासुखकराः किल ॥ ७०

(VI-37) किन्नरद्वन्द्वविलसत्कीरवल्लभमण्डलम् ।
मत्क्रोडहिण्डितमिदं महनीयतरं खलु ॥ ७१

1. हेलायामलगल्लतालिभीषणालीलादकन्याशतम् ।

(VI-37) माणिक्यमुक्तामणिजीवं सन्मङ्गलकरलालिता ।
वण्यामूल्याम्बरा दिव्यवासो भूषासुमाल्यसौ ॥ ७२

(VI-37) साक्षान्मदग्रसन्तानमानभूतानि संवदन् ।
सर्वैरहाभिनन्द्याय सार्वभौमाय धीमते ॥ ७३

(VI-37) सर्वाणि तानि जामात्रे स गिरीन्द्रो ददौ मुदा ॥ ७४

(VI-38) दिव्यापि दीप्तिसुचिह्नसविंशो भिरत्न-
सङ्घं निवेश्य सकलं ससवे स्वजातम् ।
साम्योज्ज्वलं वसुपदाख्यजानां नदी सा
पद्ममिराममनसुपादयुतं ततान ॥ ७५

(VI-39) राजावलीमकुटराजितरत्नकान्ति-
नीराजितं कटकनित्यधुरन्धरं तम् ।
पद्मोन्नतं निजपदाह्वययोग्यमात्म-
सेनाधिपं वसुपदं स मुदा चकार ॥ ७६

(VI-40) वधूवरौ वासवयोजितात्त-
सन्मङ्गलौ साधु समीक्ष्य चन्द्रः ।
तयोः पुरा तापकरांशुमत्त्व-
भीतयेव भेजे पर[1]भूधरोर्वीम् ॥ ७७

(VI-41) तादृक्कद्रुत्सवनिशेषतमोशङ्कस-
ज्योत्स्नावितानमसुमेषु [2]गलद्गुणेषु ।
उत्सार्य तानि दिनराडुदितारुणांशु-
दिव्याम्बराणि दिवि दिक्षु बबन्ध किं वा ॥ ७८

---

1. भूधरोविनम् 2. बलद्गुणेषु

(VI-42) विरचयति विवाहं शेषहोमान्तमिन्द्रे
प्रथितचतुरहस्सु प्राज्यहव्यादिभिस्तैः ।
बहुविधमभितृप्ता बर्हिरास्यास्सुधान्ना
वरकृपमदिशंस्तान्वाञ्छितार्थांस्तयोस्ते ॥ ७९

(VI-43) सन्तानस्फुरणं शचीपतिरदादिष्टार्थसिद्धिं शुचि-
स्सौरिर्धर्मगुणान्सुधा(कर)रिपुस्सत्कामरूपोत्करम् ।
अब्धीशो भुवनातिवश्यमधिकामोदं मरुद्यक्षरा-
ट्कल्याणातिशयं मनोजविजयं तस्मै कपर्दी क्रमात् ॥

(VI-43) आयुरारोग्यसौभाग्यमखिला मुनयो ददुः ।
अमूल्यकल्याणराजदलङ्काराय भूभुजे ॥ ८१

किञ्च, ८२

(VI-44) रिपुखण्डनसाधनप्रकाण्डं
(समिदु)द्दण्डजयप्रचण्डमिन्द्रः ।
करमण्डनदिव्यवेणुदण्डं
प्रदिशन्सन्प्रभुमण्डलेशमूचे ॥ ८३

(VI-45) योऽनन्तमितसारमूलबलसङ्क्रान्ताहिलोकस्थलो
यो वंशश्शतकोटिपर्वपटुतानुक्रान्तिकोद्यन्नगः ।
यो वा नीलशिरोधिकाग्रनटनध्वस्ताभ्रगाश्वत्पुरो
यस्सञ्जातसुपर्णभिन्नविषभृत्सोऽभूत्सुवर्णाचले ॥ ८४

(VI-45) तदग्र(ख)ण्डाः कोदण्डदण्डाः प्राञ्चो हरीशयोः ।
अमुं तस्याऽखण्डकाण्डमवेहि बुधबान्धव ॥ ८५

(VI-46) परपादपवेदण्डं हरकोदण्डहासकम् ।
दण्डमेनं कुरु भुजामण्डनं ते समिज्जयः ॥ ८६

(VI-47) घ(नस्स)न् लोकनिर्घातं घटयेदेष दारुणम् ।
आशुगस्सन्नारचयेदनल्पागमपाटनम् ॥ ८७

(VI-47) परं घोरतमस्सन्प्राक्परान्ध्यं प्रापयिष्यति ।
[1]कीलावान्सन्समिद्दीप्तलीलामाकलयेद्लम् ॥ ८८

(VI-47) विकिरेदेव विलसद्विशेषस्सन्विषोत्करम् ।
अच्युतस्सन्बलिस्फूर्तिमाहरेद्तिदुस्सहाम् ॥ ८९

(VI-47) करिष्यत्युग्रवृत्तिस्सन्कनद्वैरिगजाहतिम् ।
प्रभानिधिस्सन्प्रकटप्रतापं दर्शयिष्यति ॥ ९०

(VI-47) सर्वगीर्वाणविभवधूर्वहं दिव्यसाधनम् ।
एतद्धर्ता लोकभर्ता योधाधीशो भवेद्युधि ॥ ९१

अपि च, ९२

(VI-48) सच्छिद्रं परिपूर्णसाररहितं प्रागेकवंशं दध-
न्गोचक्रं स्ववशीचकार पृथुको गोपान्ववायोदितः ।
अच्छिद्रं ह्यतिमात्रसारममुकं वंशोत्तमं संवह-
न्गोचक्रं सकलं न पालयति किं गुम्भत्प्रतापोज्ज्वलः ॥

(VI-49) लगन् चण्डतमः पर्वलवसन्धौ कदाचन ।
पातितौ राजमार्ताण्डौ परं चण्डतमो नु सः ॥ ९४

(VI-49) असौ महोद्दण्डतमो ह्यखण्डगतिमान्ग्रसन् ।
पिनष्टि राजमार्ताण्डान् पर्वसन्धिदृढोऽनिशम् ॥ ९५

(VI-50) शेषायता भुवनपोषविशेष कीर्ति-
योषावहा जगति मूर्तिमती जयश्रीः ।

1. कीलापान् सन्

एषा गदैतद्(प)माञ्जदयोगदा का
भूषा भुजस्य भूशमस्तसमस्तदोषा ॥ ९६

(VI-51) विधीशविष्णुसेनान्यामायुधान्यन्वसान्वतः ।
भक्त्या सदा भावयैनं कुर्याम्ति कुशलान्यसौ ॥ ९७

(VI-52) इतीरयन्दिव्यवंशामिष्टाय वसुभूभुजे ।
इन्द्रो दत्त्वा निजावासमियाय सहगा मुदा ॥ ९८

तदनु, ९९

(VI-53) गिरिणा गिरिजामाता गिरिजामाता च कलमत्कारः ।
प्रहितास्सरिद्गिरीशा मुदिताः स्वं स्वं भेजिरे त्रिदिताः ॥

(VI-54) अधीशभूमीशनिवेशनव्य-
प्रवेशदीक्षोचितमङ्गलानि ।
कृत्वा कुमार्याः कुलभूभृदूचे
गाढं समाश्लिष्य सगद्गदं ताम् ॥ १०१

(VI-55) शुभवासनां घनरमानुजन्मनां
प्रगभीरनिश्चलगुणप्रथामपि ।
तनये विमृश्य तव मातृतातयो-
स्सुतरां सदा लभ सुवासिनीमणिः ॥ १०२

(VI-56) एषाऽहार्यसुता कदाऽपि न गुरुव्याहारदत्तोत्तरा
नम्रैवाप्यवरोधयोपिततुलाऽसौ दिव्यरत्नानुजा ।
मर्यादात्यवत्यसौ न हि धनश्रीवृद्धिभाक्सिन्धुभू-
रेकाकारवहाब्जजातिरिनवद्भागापरागस्थितौ ॥ १०३

(VI-56) इदमद्भुतमित्यनेकवारं
जनवाक्यं घटयेद्यथा जगत्याम् ।

भवदीयगुणैः प्रथा यथा न-
स्तनये साधु तथा चराऽनुवेलम् ॥ १०४

(VI-57) ज्यायां ज्यायां पतिकृतकनद्भर्मकार्यानुकूला
सम्यक्ज्ञातास्मृतिरिह सती सत्यधीशैकभावा ।
कन्या कन्या विलसदिनसत्कारभाग्याधिराशि
र्वामा वामा ह्यभिहितविधाऽनङ्ककार्यानुकूला ॥ १०५

(VI-58) एतन्नदीतटमहीस्थितिरेतदश्मा-
वासरुशकुन्तमृगवर्गसखीत्वमेतत् ।
चिन्तावहं चिरतपःकृतिसाधनं ते
मा मास्त्वितःपरमभीष्टरमामहत्याः ॥ १०६

(VI-59) इति तातेरितां कन्यामतिताराश्रुलाननाम् ।
जननी तां समाश्लिष्य घननीतीरुवाच सा ॥ १०७

(VI-60) स्यूतामोदरसानुजातविसरान्द्योताभिराजन्मणी-
नेतानञ्चितराजहंसपृथुकव्रातानपि प्रेषये ।
ख्यातालीश्च चिरं प्रपातभुवनस्फीताऽगमिष्याम्यहं
ते तापो हृदि मास्तु मास्तु गिरिजे प्रीता भवाहर्निशम् ॥

किञ्च, १०९

(VI-61) मत्तालिस्वनमञ्जुमामकतटीकुञ्जान्मधौ वीक्षितुं
माधुर्यार्यमदीयवारिणि महत्याप्लावनार्थं शुचौ ।
मान्यानुत्तरणीन्मदूर्मिविसरान्मातुं नभस्यूर्जके
माद्यद्धंसमदम्बुनि प्रिययुता स्नातुं त्वमायास्यसि ॥

(VI-61) ततश्चेतस्तापकरी तनुतानवकारिणी ।
तारल्यदायिनी चिन्ता तनये तव नोचिता ॥ १११

(VI-62) मातेत्याश्वास्य तां दध्यौ मास्तु कन्या द्विषामपि ।
विरोधस्फूर्तिभाजो मे विधिस्तां सृष्टवानिति ॥ ११२

(VI 63) स्वर्मानिनीषु सुरवत्स्वरनर्तनासु
सौदामिनीष्विव घनस्वनगुम्भितासु ।
राजाऽप गिर्यनुमतो रमणीसमेतो
रम्यं पुरं स्वमथ रत्नरथाधिरूढः ॥ ११३

तदानीं, ११४

(VI-64) धन्यां समागतधराधरराजकन्यां
सर्वास्समीक्षितुमितास्सहसा मृगाक्ष्यः ।
सौधाट्टगोपुरसभारथनाट्यशाला-
भोगाधिवासभुवनेश्वरचन्द्रशालाः ॥ ११५

(VI-65) तदा मदीयतरुणीजनसृष्टिरेतस्या न सदृशीति ज्ञापनाय विधिना सकलललना युगपदानीता इव, निजभाग्यलक्ष्म्यामागतायां नितान्तानन्देन नीरजास्त्रेण निखिलात्मसेनाराजिप्रदर्शनाय नियोजितसकलमूलबलपरम्परा इव, भवदीयभामिनी समाहृता मामकलक्ष्मीरिति वसुवल्लभाय समाक्रन्दितुमेकदैव मिलिताशेषयोषा इव, जलसुतासदृशकन्यका जगति न सन्ति किमिति महेर्ष्यासहितभूजनितसङ्ख्यारहितरमणीराजय इव, गणनातिलङ्घिवयोरूपगौरवललितगिरिजया सममप्राप्ततुलास्सम्प्राप्तोपरिभागा इव, वसुराजनगरतिलकवारिजनयनास्सौधादिषु संलक्षिता गुणसुकरैर्जननिकरैः । तदानीं;
११६

(VI 66) पद्माक्ष्यो वीक्ष्य तौ पद्मापद्माक्षाविव दम्पती ।
पद्माधिकगुणौ चेतःपद्मामोदाः परस्परम् ॥ ११७

(VI-67) आकृष्टो विबुधैरवाप्तजलधिस्सन्मन्दरागो ददा-
वेकां प्राक्पुरुषोत्तमाय वनितामेतत्कियद्वेत्यसौ ।
शैलस्सिन्धुमितस्स्वतोऽधिकजवेनामन्दरागोददौ
स्त्रीरत्नं पुरुषोत्तमाय सदिति स्त्रीराजयस्तुष्टुवुः ॥

(VI-68) कान्त्याऽभिरूप्यजितकञ्जशरेन्द्रसूनो
रर्हाङ्गनाऽस्य न चरेष्वचरेऽपि वेति ।
उत्कोऽसृजद्विधिरिमामुभयोस्तुतैषा
झर्यां गिरेरपि भवेन्न्विति काश्चिदूचुः ॥ ११९

(VI-69) कात्यायनीं तरुणधूर्तवतंसकेन
नक्षत्रजातिमभिनन्द्यकलेन राज्ञा ।
छायां सुदुस्सहविभेन विधेरकीर्ति-
र्याऽभूद्रतिं च मधुपायिगुणेन योक्तुः ॥ १२०

(VI-69) सदृग्वयोर्वशरूपसद्गुणाढ्याविमौ विधिः ।
संयोज्य तां ममार्जेति सादरं काश्चिदस्तुवन् ॥ १२१

(VI-70) शृण्वन्तानि वचांसि शोभनयुतं मुक्तावृतं सद्विजं
नित्यस्फूर्जदनन्तरत्नसुषमानीराजनालङ्कृतम् ।
श्वेतद्वीपमिवाभिशोभि सदनं स्वं संविवेशोर्जितं
हर्षेणावनिभृन्नदीप्रियसुताहस्ताम्बुजालम्बनः ॥ १२२

(VI-71) एवं शुभलग्ने कृशावलग्नया तया साकममन्दविभवसन्दीपितनिज-मन्दिरप्रवेशमङ्गलमङ्गीकृत्य, गुरुबुधकविसमाजस्यातिभास्वद्रुचि-कलापसौभाग्यमापादयन्, राजमण्डलस्याऽक्षीणलक्ष्मीविलासं संयो-जयन्, मित्रवर्गस्याऽसंख्यतरतु(र)ङ्गशताङ्गसङ्घं सङ्घटयन्, महा-नटानां महितचित्राम्बरसम्पदा समधिकसन्तोषं सम्पोषयन्, विद्याध-राणां विपुलविपुलाधिपत्यं विरचयन्, पुनरन्यमार्गणानां प्रत्येकम-

गणितफलजालमाकलयन्, विश्वविश्वम्भराजनविस्मयनीयवितरण-
चातुरीधुरीणो विबुधजनबान्धवो वसुसार्वभौमो विविधकल्याण-
विभासुरे समयविशेषे ; १२३

(VI-72) अत्रासवृत्त्यर्पितनूत्नराग-
कान्तोरुमाणिक्यकदम्बकेन ।
समुज्ज्वलन्नव्यसमागमाश्व-
द्रुच्यालिरामामितमौक्तिकौघैः ॥ १२४

(VI-72) रतीशबाहाभरतिप्ररूढि-
प्रदर्शकश्रीरमणीसमूहैः ।
पुम्भावसम्भावनपूर्णवामा-
लोकार्यरत्नैरपि लोकनीयैः ॥ १२५

(VI-72) कन्याततेः कामकलारहस्य-
प्रदर्शनार्थं प्रकटीकृताभिः ।
पाञ्चालिकाभिर्वरनर्मभर्म-
हर्म्यं स भेजे घनहर्षपूर्णः ॥ १२६

(VI-73) तदनु तत्र बन्दीकृतवैरिराजमन्दिरेन्दिराः निबिडतरनिश्वासान्नितरां विसारयन्त्य इव काश्चन यन्त्रपाञ्चालिकाः कालगरुधूपसन्ततिं कल्पयामासुः, पुञ्जीकृतस्नेहभूरिमोहनशक्तयः पूर्णानुरागकलिकाः प्रकटयन्त्य इव काश्चन यन्त्रसालभञ्जिकाः कमनीयरत्नदीपिका धारयामासुः, अङ्गीकृताङ्गवसन्ताधिदेवता निजचोरलक्ष्मीं दर्शयन्त्य इव काश्चन यन्त्रपुत्रिका विकचसुमतालवृन्तानि वीजयामासुः, प्रकटीकृतानन्तरतिमूर्तयः प्रसवशरशास्त्रसञ्चिकाः प्रदर्शयन्त्य इव काश्चन मणिमयबालिकाः कनकरुचिरधवलनागवल्लीदलानि विभवे योजयामासुः । १२७

(VI-74) तप्तस्वर्णविशेषकल्पितमहाताम्राम्बराग्र्यप्रभा
सान्द्रोष्ठाञ्चसुमानि चम्पकधिया सन्त्यज्य सर्वात्मना ।
आयातान्भ्रमरान्स्वरत्नमुकुलान्यत्यच्छमुक्तामणी-
प्राश्वयन्त्रशुकारवैर्हसदिव प्राप्तस्स शय्यातलम् ॥

तदनु, १२९

(VI-75) शैलाधीशभवा घनात्यतिमहायत्नैकसम्प्रस्थिता
व्यालोलाधिकभङ्गवक्रगमना व्याकीर्णफेनाम्बरा ।
आयाता पिहिताञ्जवक्त्रविलसद्वेणी सती सा विभो
श्श्रीकल्याणगुणाम्बुधेर्घनमुदे श्रीनव्यरागान्विता ॥

(VI-75) अधिकरसव्याकुलद्भुनालिसम्प्रार्थनया कथङ्कथञ्चिच्छनैश्शनैः, १३१

(VI-76) साऽगत्य सालिरिनसन्नपुरोञ्जकान्त-
भित्त्या स्थिता व्यवहिता भृशनिर्मलश्रीः ।
साऽदर्शयत्सपदि तामधिपाय को वा
राजस्वगोपनरतश्शुचिवृत्तिरुर्व्याम् ॥ १३२

(VI-77) सद्रत्नप्रतिबिम्बितः स्वसवयोरूपा भजन्तीस्सखी-
र्मत्वा किञ्चिदपत्रपालिनिकरे मन्दं बहिः केनचित् ।
व्याजेनाभिविनिर्गतेऽपि गिरिजा व्यानम्रवक्त्रा स्थिता
सव्रीडालिजनान्तरङ्गविलसत्सख्याधिका[1]भ्यासतः ॥

(VI-78) तदनु तामरसशरतादृशाकलनया वामदेवेन सह दृश्यवामार्धत-
नूरिव, मोहकाग्रेसरमुख्ययत्नेन पुरो लक्षिता पुनरपि स्तम्भदेशमा-
यान्ती यन्त्रपाञ्चालिकेव, रसालसालपरिग्रहार्हा राजदुपघ्नावाप्तिमत्य-
जन्ती रमणीयलतिकेव, आधोरणप्रार्थनागौरवादालानमपहाय

1. काम्यानितः

शनैश्शनैरायान्ती मनोजसामजमणीव वराङ्गी सा वरकराकृष्टा वनजरिपुशिलास्तम्भादर्धं निस्सरन्ती बहिर्निर्गत्य लज्जया चलन्ती पुनः स्तम्भमेकहस्तेनावलम्बयन्ती तदवलम्बमपि विहाय मन्दमन्द-माससाद महनीयां विभुशय्याम् । १३४

(VI-79) सा कर्णोत्पलसङ्गतालिमृदुसंराव[1]श्रियेवाहता
स्तम्भं तं शनकैर्विहाय सदनाधारं सभूभृज्जयम् ।
बाहुस्तम्भमिता बभावथ सदाधारं तदङ्गेर्ष्यया
जातस्तम्भगुणानि किं जनपतेरङ्गानि सर्वाण्यपि ॥

(VI-80) कमनीयरत्नकटकारवस्तदा
[2]कमनेन मा भव कदाऽपि कोपना ।
समुदुल्लसेति सहजानुरक्तितः
कृतलालनक्रम इवास तत्करे ॥ १३६

(VI-81) आशासंरोधदक्षाम्बरवृतिनिपुणालोककृत्यान्तराये
सर्वत्रावारके सत्यनुपमललिते सत्वरं काङ्क्षति स्म ।
श्यामामन्दाक्षमुद्राघनतरतिमिरे शम्बराराति पान्थः
खिन्नस्सन् राजराजत्करललितमहालम्बसञ्चाररीतिम् ॥

(VI-82) पद्मिन्यास्तुहिनावगुण्ठनभृतः पञ्चाननादीप्सितो
वर्ण्याभेद्यतरच्छदावरणयोर्वक्षोज[3]सत्कोशयोः ।
अत्यन्ताप्रतिभासनादधिपदद्भृङ्गौ भ्रमन्तौ स्थितौ
विष्वक्कृत्सुमनोविकासविलसद्वेलातिसौख्यार्थिनौ ॥

1. श्रियेवाहृता 2. कमुकेन
3. तत्कोशयोः

(VI-83) नीरजाक्षीरूपलक्ष्म्या निरवद्यदृगंशुभिः ।
नीराजयंस्तदा राजा निजगादानुरागतः ॥ १३९

(VI-84) पाणौ ते नरशङ्खपद्ममकरौ नीवीं कुतो न त्यजे-
न्नेत्रेऽनल्पशतच्छदे न नयसे नेत्राञ्चलं (ते) कुतः ।
वक्त्रं चन्द्रमनोहरं न दिशसि व्याहारलेशं कुतो
दिव्याहारघनोऽधरोद्य कवलास्वादो नदेयः कुतः ॥

(VI-84) कुचयोश्चक्रजयिनोः कुतस्ते व्यापिकञ्चुकः ।
निस्तौल्यगुणसद्रत्ननिधेस्त्रासः कुतो नु ते ॥ १४१

(VI-85) पादौ मत्कटकाधिपत्ययशसे किं लालयानि प्रिये
मन्दं श्रोणितलं स्पृशानि किमु मन्नेत्राह्वयस्फूर्तये ।
अन्वर्थत्वकृते लगानि नु कुचौ मन्नायकत्वस्य ते
कर्णाभ्याशमटानि मत्कुवलयाधीशत्वयुक्त्यै किमु ॥

(VI-85) वहानि किं मामकीनवसुराजार्हताप्तये ।
सन्ध्यासमाधरं प्राप्य सम्पूर्णरुचिवैभवम् ॥ १४३

(VI-86) इत्यालपन्परिममर्श हितोऽथ शैल-
कन्यात्रपाझरनिगूढतराङ्गदेशम् ।
नाभीकुचादिघननिम्नमहोन्नतोर्वी-
स्तत्संनिगाहमनसेव तदा विबोद्धुम् ॥ १४४

(VI-87) [1]तादृग्गोप्तृशय(प्रवाल)तरलाधारे तदभ्यन्तरा-
नङ्गोत्तंभितकम्पचञ्चलपटाहूताधिराट्पाणिना ।

1. तादृग्गोप्तृशय तरले तत्राभ्यन्तरा

दुर्गे भीरुकुचाह्वये दृढसमाक्रान्ते भयज्ञापका
जाताः किं जघनस्थलीवरणभूजाग्रत्स्वनद्घण्टिकाः ॥

(VI-88) सा मुग्धात्मशयैकवञ्चिततरा सम्यक्प्रियक्षोणिरा-
डायत्तस्तनदुर्गवत्यपि गलन्नीव्यप्यलं तत्स्थले ।
कस्मादात्मशयद्वयं व्यकलयत्कामं वृथा तत्क्रिया
प्राप्ते राजकरार्पणार्हसमये किं प्रातिकूल्यं क्षमम् ॥

(VI-89) राजन्यपास्तसमये रामानीवीहरे गता लज्जा ।
दृढयोगदृष्टनीव्यो गतनीवीपार्श्वगा न हि क्षोण्याम् ॥

(VI-90) शये विभोर्भीरुशरीरभाजि
रसाकृतिस्वेदरसातिसिक्ता ।
जगाल कस्तूर्युरसो जवेन
तपातमोवत्स्वतलादशक्तया ॥ १४८

(VI-91) वक्षोजाम्बुजकोशयोर्विधुशिशुव्रातानविस्तारय-
न्नाताम्राधरपल्लवे न कलयन्नश्व[1]द्विजौघाहतिम् ।
कैश्याम्भोदचये प्रकम्पनमहायासं (न) सम्पादयं-
स्तस्या ना रचयन्वरो घनतिरोधानं स्मिताब्जातपे ॥

(VI-91) उल्लासयन्भूमृदुदारभङ्ग्या
सल्लापयन्नूतनसारसाक्षः ।
बालामणेर्बन्धु(र)नव्यभोग-
लीलामतानीदतिलीढचित्तम् ॥ १५०

1. द्विजामाहवम् ।

(VI-92) सा सिन्धुसन्तानतयाऽथ वल्ली-
तन्वी महोदारतरार्थिने तान् ।
उरोजगुच्छोष्ठफलाभिवासो-
भूषाविशेषान्मृशकीर्तयेऽदात् ॥ १५१

(VI-93) मोहं परं श्रमजलं मुहुरक्षितन्द्रीं
तृष्णामतृप्तिमपि दिव्यरसाधरेण ।
संवर्धयन्त्यधिपतेस्सततं कथं सा
भूता नु सिन्ध्वमृततो भुवनाभिरामा ॥ १५२

(VI-94) साहित्यातिरहस्यमाशु रमणात्संसाध्य सद्यो ददौ
पत्युः प्रत्युपदेशमप्रतिमया प्रौढ्या ध्वनिव्यञ्जनाम् ।
राज्ञश्श्रोत्रगतां च लोचनरसोन्मेषं मुखस्थं च सा
कान्तामोदकबह्वलङ्कृतिमहामौखर्यमातन्वती ॥ १५३

(VI-95) सम्भोगान्तनितान्तसौख्यमुभयोस्संवेदयामास त-
द्ब्रह्मानन्दरसापरागनुभवं प्राज्यं ह्यवेद्यान्तरम् ।
निर्लेपाभिकलापकं क्रममहामुक्तानुबन्धक्रियं
दम्पत्योरपुनर्भवोदितरुजावेशं सदुज्जृम्भितम् ॥ १५४

(VI-96) इलापरिवृढौ कामकलापरवशौ हि तौ ।
रमणीयरतानन्दकमनीयत्वमापतुः ॥ १५५

(VI-97) प्रत्यग्रपल्लवपदोपवनप्रदेश-
कुञ्जव्रजे शुककुलान्यथ नाटयन्तौ ।
पद्मालयोदरपरिस्फुरदम्बुजात-
वीथीषु हंसवलनानि विमर्शयन्तौ ॥ १५६

(VI-97) गाङ्गेयधामघनभृङ्गतटेषु नील-
कण्ठाभिकान्तगमनानि विलोकयन्तौ ।

नीहारधामकरनिर्मलसिन्धुवेदि-
द्वीपेऽरुणाम्[1]खगसद्विहृतिं स्तुवन्तौ ॥ १५७

(VI-97) रतिस्मरौ वाग्द्रुहिणौ शचीन्द्रौ
[2]रमाहरीव स्तुतरम्यरूपौ ।
तौ दम्पती तेनतु(र)ग्रयशीलौ
समस्तवेलोचितसारलीलौ ॥ १५८

(VI-98) परवश इति मत्वा किं पतिं शैलजायां
गुरुतरवरकीर्तिर्गोत्रसन्नन्दनाऽसीत् ।
भृशमगतनयाऽभू[3]द्भूरि(तो) तज्जयश्री-
स्सततमचलभूतिस्साऽस साम्राज्यलक्ष्मीः ॥ १५९

(VI 99) राज्ञस्तस्य जगाल तस्करकथाराजद्यशोज्योत्स्नया
बाधाऽवग्रहजा घनस्य बहुधा दानाम्बुवर्षैर्गता ।
पङ्का दस्युभवा शशाम जगतीबन्धोः प्रतापातपात्
शान्तस्साधु नदीभृतो भुवि सदा चर्यामृतेनामयः ॥

(VI-99) श्रीलीलासदनस्य शैलजयिनश्शृङ्गारतेजोदया-
द्रम्यस्यार्यनयस्य तस्य महिते राज्ये [लसन्मं]गले ।
प्राज्यैरिष्टफलैः परं दधिघृतैश्चाखण्डभोगैस्समं
प्रायो भूरिसमृद्धवैभवततिं प्रापुः प्रजा[4]स्सुस्थिराम् ॥

कामाक्षि देवि करुणामयि कामकोटि
काञ्चीपुरीश्वरि कदम्बवनीनिवासे ।

---

1. जगसद्विहृतिं वसुन्ती  2. रमाहरीति
3. भूद्भूरितजोजयश्री  4. स्सु..........

कान्तैकचूतपतिना कलितावधाना
  कर्णामृतं कलय काव्यमिदं मदीयम् ॥ १६२

कामाक्षि देवि करुणां मयि पूरयित्वा
  कान्तैकचूतपतिना कवितानुमोदा ।
कान्तं सुवर्णघनवृत्तमलङ्कृतीढ्यं
  कर्णोचितं कलय काव्यमिदं मदीयम् ॥ १६३

इति श्रीकामाक्षीदासकालहस्तिकविकृतौ

वसुचरित्रे चम्पूकाव्ये

षष्ठ आश्वासः

---

# ERRATA

## शोधनपत्रम्

| Page | Line | Read | For |
|---|---|---|---|
| 24. | F.N. | कदन must be in page No. 23. | |
| 24. | 4. | भासमानमपि नमेरु | भासमानमपिनमेरु |
| 36. | 5. | तस्याः | तस्यः |
| 82. | 15. | तन्वङ्गी ग्लपय | तन्वङ्गीग्लपय |
| 127. | 13. | तदिन्द्रपाये | तदिन्द्रिपाये |
| 132. | 21. | विनीसंज्ञायां | निघीसंज्ञायां |
| 166. | 16. | योऽनन्तामित | योऽनन्तमित |

# पद्यानुक्रमणिका